THE

PRINCESS OF WALES

SARASWATI BHAVANA TEXTS

No. 43.

( PART II )

THE

# SMĀRTOLLĀSA

( PART II )

GOVERNMENT SANSKRIT LIBRARY,

BENARES.

Price, Rs. 2-12-0]

THE

PRINCESS OF WALES

# SARASWATĪ BHAVANA TEXTS

*No. 43*

( PART II )

—o—

EDITED BY

Mahāmahopādhyāya

GOPĪ NATHA KAVIRĀJA, M. A.

---

THE

# SMĀRTOLLĀSA

( PART II )



*Printed by Jai Krishna Das Gupta*
*Vidya Vilas Press, Benares City.*

1935

# स्मार्त्तोल्लासः

श्री शिवप्रसादकृतः

( द्वितीयोभागः )

वेदाचार्य पण्डित श्रीभगवत्प्रसादशर्मणा
टिप्पण्यादिभिर्विभूष्य संशोधितः ।

THE

# SMĀRTOLLĀSA

BY

S'RĪ S'IVAPRASĀD.

( PART II )

EDITED WITH NOTES

By

VEDACĀRYA
BHAGVATPRASADA S'ARMĀ
Professor, Govt. Sanskrit College, Benares.

1935.

सुमोक्षितादिकरणम् । प्राङ्मुखः कर्ता उपविश्य प्रतिगृहीता उदङ्मुख उपविश्य कर्त्रा यथाशक्तिसुवर्णाज्यान्वितकांस्यपात्रे गोपुच्छनिक्षेपणम् । दक्षिणहस्तेन सपुच्छाज्यपात्रसतिलयवकुसुमजलानां च दानम् । देशकालयोरुच्चारणान्ते—

ॐ गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।

---

न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ।

( या० स्मृ०१। १९९-२०० ) भविष्यपुराणे—

क्षान्तिः स्पृहा दया सत्यं दानं शीलं तपः श्रुतम् ।
एतदष्टाङ्गमुद्दिष्टं परमं पात्रलक्षणम् ॥ वशिष्ठः—

"स्वाध्यायाढ्यं योनिमन्तं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञम् ।
स्त्रीषु क्षान्तं धार्मिकं गोशरण्यं व्रतैः क्लान्तं तादृशं पात्रमाहुः" ।

"योनिमान्" प्रशस्तकुलोद्भवः । "वैतानस्थः" अग्निहोत्रादिकर्मपरः। "स्त्रीषु क्षान्तः" स्त्रीविषये क्षान्तः। "गोशरण्यः" गोशुश्रूषारतः ।

"स्वाध्यायवान्नियमवाँस्तपस्वी ध्यानाविच्च यः ।
क्षान्तो दान्तः सत्यवादी विप्रः पात्रमिहोच्यते" । महाभारते—

"साङ्गांस्तु चतुरो वेदान् योऽधीते वै द्विजर्षभः ।
षड्भ्यो निवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः ॥
किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम् ।
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे" ॥ बृहस्पतिः—
"ब्रह्मचारी भवेत्पात्रं पात्रं वेदस्य पारगः ।
पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे" । व्यासः-
"असङ्कीर्णं च यत्पात्रं तत्पात्रं तारयिष्यति" । इति ।

असङ्कीर्णं=योन्यादिसङ्कररहितम् । विशेषस्तु पात्रापात्रनिर्णयो हेमाद्रिदानखण्डे द्रष्टव्यः ।

यस्मात्तस्माच्छिवं मे स्यादिहलोके परत्र च ॥
गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः ।
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥
यज्ञसाधनभूता या विश्वस्याघौघनाशिनी ।
विश्वरूपधरो देवः प्रीयतामनया गवा ॥

इत्युक्त्वाऽमुकगोत्रायाऽमुकप्रवरायाऽमुकशर्मणे ब्राह्मणायाऽमुकगोत्रोऽमुकशर्माऽहं प्रारीप्सितप्रायश्चित्तसाद्गुण्यकाम इमां गां सवत्सां (१)रुद्रदैवत्यां यथाशक्त्यलङ्कृतां तुभ्यं सम्प्रददे इत्युक्त्वा ति-

(१) अत्र प्रसङ्गाद् द्रव्यदेवताः लिख्यन्ते । तैत्तिरीये—

सोमाय वासः । रुद्राय गाम् । वरुणायाऽश्वम् । प्रजापतये पुरुषम् । मनवे तल्पम् । त्वष्ट्रेऽजम् । पूष्णेऽविम् । निर्ऋत्या अश्वतरगर्दभौ । हिमवते हस्तिनम् । गन्धर्वाप्सरोभ्य स्रगलङ्करणे । विश्वेभ्यो देवेभ्यो धान्यम् । वाचेऽन्नम् । ब्रह्मणे ओदनम् । समुद्रायापः । उत्तानायाऽङ्गिरसायानः । वैश्वानराय रथम् ।

विष्णुधर्मोत्तरहेमाद्रिदानमयूखेषु—

अभयं सर्वदैवत्यं भूमिर्वै विष्णुदेवता ।
कन्या दासस्तथा दासी प्राजापत्याः प्रकीर्त्तिताः ॥
तथा चैकशफं सर्वं कथितं यमदैवतम् ।
महिषाश्वास्तथा याम्या उष्ट्रो वा नैर्ऋतो भवेत् ॥
रौद्री धेनुर्विनिर्द्दिष्टा छागमाग्नेयमादिशेत् ।
मेषं तु वारुणं विद्याद्वराहं वैष्णवं तथा ॥
आरण्याः पशवः सर्वे कथिता वायुदेवताः ।
जलपात्रांस्तु सर्वांस्तु वारिधानीं कमण्डलुम् ॥
कुम्भं च करकं चैव वारुणानि निबोधत ।

समुद्रजानि सर्वाणि वारुणानि द्विजोत्तमाः॥
आग्नेयदैवतं प्रोक्तं सर्वलोहानि चाप्यथ।
प्राजापत्यानि सस्यानि पक्वान्नमपि वै द्विज॥
ज्ञेयास्तु सर्वगन्धा वै गान्धर्वाश्च विचक्षणैः।
बार्हस्पत्यं स्मृतं वासः सौम्या ज्ञेया रसास्तथा॥
पक्षिणश्च तथा सर्वे वायव्याः परिकीर्त्तिताः।
विद्या ब्राह्मी विनिर्दिष्टा विद्योपकरणानि च॥
सारस्वतानि देयानि पुस्तकादीनि पण्डितैः।
सर्वेषां शिल्पिभाण्डानां विश्वकर्मा तु दैवतम्॥
द्रुमाणामथ पुष्पाणां शाकैर्हरितकैः सह।
फलानामपि सर्वेषां तथा ज्ञेयो वनस्पतिः॥
मत्स्यमांसे विनिर्दिष्टे प्राजापत्ये तथैव च।
छत्रं कृष्णाजिनं शय्यां रथमासनमेव च॥
उपानहौ च यानं च यच्चान्यत् प्राणिवर्जितम्।
तत्तु चाङ्गिरसत्वेन प्रतिगृह्णीत मानवः॥
शूरोपयोगि यत् सर्वं शस्त्रवर्मध्वजादिकम्।
रणोपकरणं सर्वं विज्ञेयं सर्वदैवतम्॥
गृहं तु सर्वदैवत्यं यदनुक्तं द्विजोत्तम।
विज्ञेयं विष्णुदैवत्यं सर्वं वा द्विजसत्तमाः॥

हेमाद्रौ—यजुः पाठानन्तरं "राजा त्वा वरुणो नयतु देव दक्षिणे अमुकस्मै अमुकान्तेनामृतत्वमश्यां मयो दात्रे मयो मह्यमस्तु प्रतिग्रहीत्रे"। ततः कामस्तुतिः। ॐस्वस्तीति विशेषः।

(१) विष्णुधर्मोत्तरे—
"भूमेः प्रतिग्रहं कुर्याद् भूमिं कुर्वन् प्रदक्षिणम्।
करे गृहीत्वा कन्यां च दासदास्योर्द्विजोत्तमाः॥

करं तु हृदि विन्यस्य धर्म्यो ज्ञेयः प्रतिग्रहः ।
आरुह्य तु गजस्योक्तः कर्णे वाश्वस्य कीर्त्तितः ॥
तथा चैकशफानां तु सर्वेषां च विशेषतः" । तथा कर्णः—
प्रतिगृह्णीत तान् शृङ्गे पुच्छे कृष्णाजिनं तथा ॥

तान् एकशफान् । अत्र शृङ्गिणामेकशफानां शृङ्गे इतरेषां कर्णे इति तु व्यवस्था ।

कर्णेऽजः पशवः सर्वे ग्राह्याः पुच्छे विचक्षणैः ।
गृह्णीयान्माहिषं शृङ्गे खरं वै पृष्ठदेशतः ।
प्रतिग्रहमथोष्ट्रस्य यानानां चाधिरोहणात् ।
बीजानां मुष्टिमादाय रत्नान्यादाय सर्वतः ॥
वस्त्रं दशान्तादादद्यात् परिधायाथवा पुनः ।
आरुह्योपानहौ मञ्च आरुह्यैव तु पादुके ॥
वर्मध्वजौ तु संस्पृश्य प्रविश्य च तथा गृहम् ।
अवतीर्य च सर्वाणि जलस्थानानि वै द्विजाः ॥
ईषायां तु रथो ग्राह्यश्छत्रं दण्डे तथैव च ।
द्रुमांश्च प्रतिगृह्णीयान्मूलन्यस्तकरो द्विजः ॥
आयुधानि समादाय तथाऽऽमुच्य विभूषणम् ।

परिशिष्टे तु,—

प्रतिगृह्णीत गां पुच्छे कर्णे वा हस्तिनं करे ॥
मूर्ध्नि दासीमजं चैव पृष्ठेऽश्वतरगर्दभौ ।
अश्वं कर्णे सटे वाऽपि अन्नमुद्दिश्य धारयेत् ॥
शय्यासनं गृहं क्षेत्रं संस्पृश्यादाय काञ्चनम् ।
उष्ट्रं च ककुदे स्पृष्ट्वा मृगांश्च महिषादिकान् ।
गोधामश्वविधानेन पुच्छे संस्पृश्य पक्षिणः ॥
दंष्ट्रिणो दंशिनश्चैव तथा क्षुद्रमृगाश्च ये ।
ओजस्विनां च सर्वेषामेष एव विधिः स्मृतः ॥

ॐ देवस्य त्वा सवितुरित्यादि पूष्णो हस्ताभ्यामित्यन्तं(१) मन्त्रं पठित्वा

छत्रं च चामरं मूले फलं संगृह्य गौरवात् ।
अगृह्योपानहौ मन्त्रं वाचयेत् प्रतिमुच्य वै ॥
वासस्त्वथ समादाय कन्यां शीर्षण्यथ वै करे ।
रतिभार्यां परपूर्वां प्रतिगृह्णीत चाक्षताम् ॥
पुत्रमुत्सङ्गमारोप्य प्रतिगृह्णीत दत्तकम् ।
रथं रथमुखे स्पृष्ट्वा प्रतिगृह्णीत कूवरे ॥
कूवरो युगाधारकाष्ठम् ।
युग्यकाञ्चनवस्त्राणामङ्गयुक्ते प्रतिग्रहः" ॥ इति ॥

"हेमशृङ्गी शफैरौप्यैः सुशीला वस्त्रसंयुता ।
सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा"(या०स्मृ०१।२०४)
"यथाकथचिद्दातव्या धेनुं वाऽधेनुमेव वा ।
अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते" । इति ।

हेमाद्रौ व्यासः—

"न व्यङ्गां रोहिणीं वन्ध्यां न कृशां मृतवत्सकाम्
न वामनां वेहतां च दद्याद्विप्राय गां नरः" । इति ।

हेमाद्रौ देवलः—

"विवत्सां रोगिणीं रूक्षां स्थविरां सङ्गभीषणाम् ।
क्षीणां क्षीणशरीराङ्गीं दत्वा दोषमवाप्नुयात्" । इति ।

(१) "ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम्" ।। मन्त्रार्थः—सवितुर्देवस्य प्रसवे = प्रेरणे सति तेन प्रेरितोऽहं त्वा = त्वां गृह्णामि । काभ्याम् अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां च । अंसमणिबन्धयोर्मध्यभागो दीर्घदण्डाकारो बाहुः । पञ्चाङ्गुलियुक्ताग्रभागो हस्तः । अश्विनौ हि देवानामध्वर्यू पूषा हि देवानां भागधुक् । अतो ग्रहणसाधनयोः स्वबाह्वोरश्विबाहुभावना कार्या ।

"रुद्राय त्वेति गाम्(१) "प्रतिगृह्णामी"त्युक्त्वा प्रतिग्रहणाम्(२)"ॐ

हस्तयोस्तु पूषहस्तभावनेति भावः। किञ्च "सत्यं देवा अनृतं मनुष्या" इति श्रुतेः (श० ब्रा० १।१।२।१७) देवानां सत्यरूपत्वात् तदनुस्मृतिपूर्वकं कर्म फलपर्यवसायित्वात् सत्यं भवति। देवतास्मृत्यभावे तु मनुष्याणामनृतरूपत्वात्तत्कृतमनुष्ठानं निष्फलत्वादनृतं भवतीति देवतास्मरणमित्यभिप्रायः। भावनानुकूला च सिद्धिर्भवति।

यथोक्तम्—"मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी" इति।

प्रकृतमन्त्रे सवित्रश्वपूषशब्दानां नावमिकन्यायेना (जै० ६। १। १२) नूह-इति प्रासङ्गिकम्।

(१) "रुद्राय त्वेति गाम्"(का० श्रौ० १०। २। २६) प्रतिगृह्णीयात्। "ॐरुद्राय त्वा मह्यं व्वरुणो ददातु सोऽमृतत्वमशीयायुर्दात्र एधि मयो मह्यं प्रतिगृहीत्रे"। (शु० य० सं० ७। ४७। इति। अत्र श्रुतिः—"अथ गौः प्राणमेवैतयात्मनस्त्रायते प्राणो हि गौरन्नꣳ हि गौरन्नꣳ हि प्राणः"इति। अथ मन्त्रार्थः-हे गौः रुद्ररूपाय मह्यं वरुणः त्वां ददातु सोऽहममृतत्वं प्राप्नुयाम्। हे गौः त्वं दात्रे यजमानाय प्राणः प्राणरूपा एधि मह्यं प्रतिगृहीत्रे वयोऽन्नं पशुर्वा भव। दुग्धदध्यादिरूपेणान्नं सन्ततिद्वारा पशुश्च भवेत्यर्थः।

(२) प्रतिग्रहविधिः ब्रह्माण्डपुराणे—

"शुचिः पवित्रपाणिश्च गृह्णीयादुत्तरामुखः।
अभीष्टदेवतां ध्यायन् मनसा विजितेन्द्रियः॥
कृतोत्तरीयको नित्यमन्तर्जानुकरस्तथा।
दातुरिष्टमभिध्यायन् गृह्णीयात्प्रयतः शुचिः॥ इति॥

प्रचेता—

"दक्षिणहस्तमध्ये ब्राह्मणस्याग्नेयं तीर्थं आग्नेयेन प्रतिगृह्णीयात्" इति। विष्णुधर्मोत्तरे—

द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्वि''ति मन्त्रेण वा प्रतिग्रहणम् ।

---

प्रतिग्रहीता सावित्रं सर्वत्रैवानुकीर्तयेत् ।
ततस्तु कीर्तयेत्सार्द्धं द्रव्येण द्रव्यदेवताम् ॥
समापयेत्ततः पश्चात् कामस्तुत्या प्रतिग्रहम् ॥
तदन्ते कीर्तयेत्स्वस्ति प्रतिग्रहविधिस्त्वयम्" ।

सावित्रं सवितृदैवतं यजुः "देवस्य त्वा" इत्यादि । कामस्तुतिः "कोऽदात्" इत्यादिका ( शु० य० सं० ७।४८ ) ।

आदित्यपुराणे—

ॐ कारमुच्चरन् प्राज्ञो द्रविणं सकुशोदकम् ।
गृह्णीयाद्दक्षिणे हस्ते तदन्ते स्वस्ति कीर्तयेत् ॥
प्रतिग्रहं पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात् ।
मन्द्रं पठेत्तु राजन्ये उपांशु च तथा विशि ॥
मनसा तु तथा शूद्रे स्वस्तिवाचनमेव च ।
सोङ्कारं ब्राह्मणे कुर्यात् निरोंकारं महीपतौ ॥
उपांशु च तथा वैश्ये मनसा स्वस्ति शूद्रजे ।

प्रतिग्रहं प्रतिग्रहमन्त्रम् । मन्द्रं मध्यमस्वरम् । ब्राह्मणे दातरि सोङ्कारं स्वस्तिवाचनं कुर्यादित्यर्थः । एवं महीपतौ इत्यादावपि योज्यम् ।

अत्रायं विचारः । "प्रतिग्रहं पठेदुच्चैः प्रतिगृह्य द्विजोत्तमात् । मन्द्रं पठेत्तु राजन्ये उपांशु च तथा विशि । मनसा तु तथा शूद्रे स्वस्तिवाचनमेव च" इत्यत्र ध्वनेरुच्चावचीभावः किं परमापूर्वप्रयुक्त उत अवान्तरापूर्वप्रयुक्त इति संशयः । तत्र परमापूर्वस्य फलवत्त्वादाद्यः पक्ष इति प्राप्ते--वाक्यगतमवान्तरापूर्वंसन्निकृष्टं तद्द्वारकं परमापूर्वं विप्रकृष्टं । तस्मात्--अवान्तरापूर्वप्रयुक्ता एते धर्मा इति ( जैमिनेः ४।१।२ ) सिद्धान्तः ।

"ॐ कोऽदादित्यस्य स्वस्ती" त्यन्तस्य(१) पठनम्। सुवर्णापरिमितस्य यथाशक्ति सुवर्णस्य सतुलसीदलस्य दक्षिणात्वेन दानम्। "कृत-गोदानस्य प्रतिष्ठासिद्ध्यार्थं इमां हिरण्यदक्षिणां तुभ्यमहं सम्प्रददे न मम" "ॐ देवस्य त्वे"ति मन्त्रान्ते "ॐ अग्नये त्वे"(२)ति हिरण्यम्। "ॐ प्रतिगृह्णामी"तिपूर्ववत्प्रतिग्रहणम्। "ॐ द्यौस्त्वा-ददात्वि"ति मन्त्रेण वा प्रतिग्रहणम्। "ॐ को दादितिमन्त्रस्योंस्वस्ती" त्यन्तस्य पठनम्। ब्राह्मणाशिषां च ग्रहणमिति(३) गोदानम्।

---

(१) "ॐ कोऽदात् कस्मा अदात् कामोऽदात्कामायादात्। कामो दाता कामः प्रतिग्रहीता कामैतत्ते" (शु० य० सं० ७।४८)इति।

कामदवत्यम्। दातुर्दानाभिमानाभावाय स्वस्य च प्रतिग्रहज-दोषाभावाय च देहेन्द्रियात्मसङ्घाते कामं विविनक्ति। को नरोऽ-दाद्दत्तवान् कस्मै नरायादात् प्रश्नद्वयस्योत्तरमाह। कामोऽ दात्कामायैवादात् न त्वं दाताऽहं प्रतिग्रहीता त्वत्कामाभिमानी देवो मत्कामाभिमानिनेऽदात्। एवं च काम एव दाता काम एव प्रति-गृहीता नान्यः। हे काम एतद् द्रव्यं ते तव दातृप्रतिगृहीतृत्त्वात्। इति मन्त्रार्थः।

(२) ॐ अग्नये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीयायुर्दात्र एधि मयो मह्यं प्रतिगृहीत्रे (शु०य० सं० ७।४७) इति। हिरण्यदैवतम्। हे हिरण्य वरुणेन कनकाद्यग्न्यादिभ्यो दत्तमतस्तेन तेनात्मना प्रति-गृह्णानो विप्रो न नश्यनीति देवतादेशः। अनेन विधिना गृह्णानः सोह-ममृतत्वमारोग्यमशीय व्याप्नुयाम्। हे हिरण्य त्वं दात्रे आयुर्जीवन-मेधि भव प्रतिग्रहीत्रे प्रतिग्रहकर्त्रे मह्यं मयः सुखमेधि दाता युष्मान् भवतु अहं सुखीस्यामिति भावः। इति मन्त्रार्थः।

(३) अत्र प्राच्याङ्गधेनुप्रतिग्रहप्रायश्चित्तमाह, कूर्म्मपुराणे—

"प्रायश्चित्ताङ्गिनी धेनुः सा प्रच्याङ्गमुदीरिता।

प्रत्यक्षगोदानासम्भवे यथाशक्तितन्मूल्यदानम् । तत्रेत्थं प्रयोगः प्रायश्चित्तपूर्वाङ्गतया विहितगोदानप्रत्याम्नायत्वेन यथाशक्तिगोमूल्यं

---

सर्वदा न प्रतिग्राह्या द्विजैर्धर्म्मपरायणैः" ॥

मत्स्यपुराणे--

"प्राच्याङ्गधेनुदाता च सर्व्वपापविवर्जितः ।
स याति ब्रह्मणः स्थानं पुनरावृत्तिदुर्लभम् ॥
धेनुं तां प्रतिगृह्णीयाद् द्विजो लोभपरायणः ।
कर्त्तुः सर्वाणि पापानि शीघ्रमाप्नोति निश्चितम् ॥
महान्तं नरकं गत्वा सूनुजन्म समेति च" ।

लिङ्गपुराणे—

"प्राच्याङ्गधेनुं गृह्णीयाद् द्विजः परमधार्म्मिकः ।
स याति नरकं घोरं यमलोके महत्तरे ॥
पश्चात् सूनुर्भवेत् सोऽपि यदि तां निष्कृतिं विना ।
प्राच्याङ्गधेनुं गृह्णीयाद् द्विजः परमधार्म्मिकः" ॥

तत्प्रतिग्रहे प्रयश्चित्तमाह रेणुकाखण्डे--

"प्राच्याङ्गभूर्यदा धेनुः सा धेनुः पापदायिनी ।
प्रतिग्रहीतुः सा सद्यः सर्वश्रेयोविनाशिनी ॥
ब्राह्मणैरभ्यनुज्ञातश्चरेच्चान्द्रायणत्रयम् ।
पश्चान्मनसि पूतात्मा पञ्चगव्यं पिबेत्ततः ॥
एवं शुद्धिमवाप्नोति नाऽन्यथा शुद्धिरीरिता" ।
इति हेमाद्र्युक्तं प्राच्याङ्गधेनुप्रतिग्रहप्रायश्चित्तम् ॥

अत्रोदीच्याङ्गधेनुप्रतिग्रहप्रायश्चित्तमाह लिङ्गपुराणे—

"द्विजो यः परितुष्टात्मा प्रायश्चित्ते नृपोत्तम ।
धेनुं द्वितीयां गृह्णीयाद् उदीच्याङ्गपयस्विनीम् ॥
तस्येह निष्कृतिर्नास्ति दानैस्तीर्थावगाहनैः ।
चान्द्रायणद्वयं कुर्य्यात् पूर्ववद्राजवल्लभ ॥

तुभ्यमहं सम्प्रददे न ममेति, नात्र दक्षिणादानम्(१)।

अथ महाव्याहृतिहोमकर्ता स्थण्डिलसमीपे उपविश्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य प्रारीप्सितप्रायश्चित्तस्य पूर्वाङ्गतया विहितं महाव्याहृतिभिराज्येनाष्टोत्तरशतमष्टाविंशति वा होमं करिष्ये, इति सङ्कल्प्य स्थण्डिले पञ्च भूसंस्कारान् कृत्वा अत्र विटपनामाग्नेः स्थापनम्। अथ वैकल्पिकं स्मरेत्। तत्र पूर्वेण ब्रह्मणो गमनादि पूर्णपात्रान्तं पूर्ववत्।

अथ ऋष्यादिस्मरणम्। इरावती वसिष्ठस्त्रिष्टप् (विष्णुः) पृथिवी, इदं विष्णुर्मेधातिथिर्गायत्री विष्णुः, मानस्तोक इति कुत्सो जगती रुद्रो, ब्रह्म जज्ञानं प्रजापतिस्त्रिष्टुप् (आदित्यः) ब्रह्मा, तत्सवितुर्विश्वामित्रो गायत्री सविता, ओङ्कारस्य ब्रह्मा गायत्री परमात्माग्निर्महाव्याहृतीनां प्रजापतिर्दैवीगायत्री दैवीउष्णिक्दैवीगायत्र्यग्निवायुः सूर्यो देवता सर्वेषां प्रायश्चित्ताङ्गपञ्चगव्यहोमे विनियोगः। ॐभूर्भुवः स्वरिति महाव्याहृतीनां प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुप् छन्दांसि अग्निर्वायुः सूर्यो देवता, त्वन्नः सत्वन्नः अयाश्चाग्ने ये ते शतमिति मन्त्राणां वामदेव ऋषिः त्रिष्टुप्छन्दः अग्नीवरुणौ देवते द्वयोस्तृतीयस्याग्निश्चतुर्थस्य वरुणः सविता विष्णुर्विश्वेदेवा मरुतः स्वर्का, उदुत्तममिति शुनः-

---

ततः शुद्धिमवाप्नोति परत्राऽमुत्र च ग्रहात्।
इति हेमाद्र्युक्तं उदीच्याङ्गधेनुप्रतिग्रहप्रायश्चित्तम्॥

(१) नात्र दक्षिणादामनवस्थानात्। दक्षिणायां दीयमानदक्षिणाया अपि सदक्षिणात्वावश्यकतया तत्रापि दक्षिणा दानप्रसक्तेस्तस्या अपि दानरूपत्वेन दक्षिणान्तरप्रसक्तिरिति रीत्यानवस्थापत्तेः।

शेपस्त्रिष्टुप् वरुणो देवता सर्वेषामाज्यहोमे विनियोगः ।

अथ देवताभिध्यानम् । तत्र प्रजापतिमिन्द्रमग्निं सोममाज्येन अग्निं वायुं सूर्यं प्रजापतिमष्टोत्तरशतं वाष्टाविंशतिं वा आज्येन, पुनरत्र प्रधानम् पृथिवीं विष्णुं रुद्रं ब्रह्माणं अग्निं सोमं सूर्यं परमात्मानं प्रजापतिं अग्निं स्विष्टकृतं पञ्चगव्येनैकैकमाहुतिभिः, अग्निं वायुं सूर्यं अग्नीवरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान् वरुणं प्रजापतिमेता देवता आज्येनास्मिन् प्रायश्चित्तकर्मण्यहं यक्ष्ये ।

ततो ब्रह्मोपवेशनादि पात्रासादनान्ते उपकल्पनीये विशेषः-सुवर्णादिपात्रं पद्मपलाशादिपात्रं वा यज्ञियकाष्ठं हरितानि सप्त कुशपत्राणि पञ्चगव्यञ्च गोमूत्रादिपृथक्पृथगिति, तत आज्यभागान्तेऽष्टोत्तरशतमष्टाविंशतिर्वाज्यहुतीनां व्यस्तसमस्ताभिर्होमः (१) ॥

ॐभूः स्वाहा इदमग्नये न मम । ॐभुवः स्वाहा इदं वायवे न मम । ॐस्वः स्वाहा इदं सूर्याय न मम । ॐभूर्भुवः स्वः स्वाहा

(१) केचिन्महाव्याहृतिहोमे गृह्योक्तसाधारणहोमेतिकर्तव्यतां नेच्छन्ति तदयुक्तं "एष एव विधिर्यत्र क्वचिद्धोमः" (पा० गृ० १।१।५) इत्यनेन "अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यꣳस्विष्टकृच्च, एतन्नित्यꣳ० सर्वत्र (पा० गृ० १।५।३-४) इत्यनेन च प्राप्ताया होमेतिकर्तव्यताया अपवादमन्तरेण बाधायोगात् । अन्ये तु निरूप्याज्यमग्नावधिश्रित्य कुशैः स्रुवं सम्मृज्योद्वास्य पवित्राभ्यामुत्पूयावेक्ष्य कुशानुपगृह्याग्निं पर्युक्ष्य जुहुयादि (श्रौ० ४।१०।५) त्येवमत्रपूर्णाहुतिमिच्छन्ति तदप्ययुक्तं श्रौतानां पूर्णाहुतिधर्माणां वचनमन्तरेण स्मार्तकर्मण्यप्रवृत्तेः ।

इदं प्रजापतये न मम । केचिदत्र सर्वत्र इदं महाविष्णवे पापघ्ने इति त्यागं वदन्ति, एवं सप्तवारं कृते अष्टाविंशतिराहुतयः सप्तविंशतिवारं कृतेऽष्टोत्तरशतमाहुतयश्च भवन्ति ।

अथ ब्रह्मकूर्चेन होमः सुवर्णादिपा(१)त्रे पद्मपलाशादि पात्रे

(१) ब्रह्मकूर्चे पात्रं प्रजापतिराह—

"पालाशं पद्मपत्रं वा ताम्रं वाऽथ हिरण्मयम् ।
गृहीत्वाऽऽसादयित्वा च ततः कर्म समाचरेत्" ॥ इति ।

ब्रह्मकूर्चाङ्गभूतानां गोमूत्रादीनां पञ्चानां कारणभूताः याः पञ्च गावस्तासां वर्णविशेषाः—

"गोमूत्रं कृष्णवर्णायाः श्वेतायाश्चैव गोमयम् ।
पयश्च ताम्रवर्णाया रक्ताया गृह्यते दधि ॥
कपिलाया घृतं ग्राह्यं सर्वं कापिलमेव वा ॥"

गोमूत्रादीनां कुशोदकान्तानां षण्णां द्रव्याणां प्रत्येकं परिमाणविशेषः—

"मूत्रमेकपलं दद्यादङ्गुष्ठार्धं तु गोमयम् ।
क्षीरं सप्तपलं दद्याद्दधि त्रिपलमुच्यते ॥
घृतमेकपलं दद्यात् पलमेकं कुशोदकम्" ॥ इति ।

इदं परिमाणं हेमाद्रि ( प० १०२३ ) सम्मतम् ।

विष्णुधर्मोत्तरे परिमाणमन्यथोक्तम्—

गोमूत्रं भागतश्चार्द्धं शकृत्क्षीरस्य च त्रयम् ।
द्वयं दध्नो घृतस्यैकमेकश्च कुशवारिजः ॥

अशक्तबालादिविषये गोमूत्रादीनां परिमाणमन्यथोक्तम् । वृद्धपराशरः—

"गोमूत्रे माषकान्यष्टौ गोमयस्य तु षोडश ।
क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्तिताः ॥

वा ताम्रायाः कृष्णायाः वा गोः पलमितस्याष्टमाषमितस्य वा गोमूत्रस्य गायत्र्या ग्रहणम् । ॐगन्धद्वारामिति मन्त्रेण श्वेतायाः गोः अङ्गुष्ठार्धमितस्य षोडशमाषमितस्य वा(१)गोस्त्रिपलस्य दशमाषपरिमितस्य वा गोमयात्पञ्चगुणस्य गोमूत्राद् द्विगुणस्य वा दध्नो ग्रहणम् । ॐतेजो(२)सीति मन्त्रेण कपिलायाः नीलायाः वा गोरेकप-

गोमूत्रवद् घृते देयं तदर्धं तु कुशोदकम् ।"

प्रजापतिः—

"गोमयाद् द्विगुणं मूत्रं सर्पि दद्याच्चतुर्गुणम् ।
क्षीरमष्टगुणं देयं दधि पञ्चगुणं तथा" ॥ इति ।

गोमूत्रादीनाम्मन्त्राः पराशरेणोक्ताः—

"गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राव्णस्तथा दधि ॥
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ।
पञ्चगव्यमृचा पूतं स्थापयेदग्निसन्निधौ" ॥

शालाग्निसत्वे तु जाबालिः—

"आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः ।
आज्येनैव तु शालाग्नौ जुहुयाद् व्याहृतीः पृथक्" इति ।

इति वचनाच्छालाग्नौ होमः ।

(१) "गोमयस्य ग्रहणम् । ॐ आप्यायस्वेति ताम्रायाः (श्वेतायाः वा) हेमवर्णाया वा गोः सप्तपलमितस्य द्वादशमाषमितस्य वा गोमयाष्टगुणस्य गोमूत्रत्रिगुणस्य वा क्षीरस्यादानम् । ॐ दधिक्राव्ण इति रक्तायाः कृष्णवर्णाया वा" इति पाठः सर्वादर्शपुस्तकेषु त्रुटितः ।

(२) पञ्चगव्यग्रहणमन्त्राः—

"ॐ तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात्" । (शु० य० सं० ३।३५) ।

लस्याष्टमाषमितस्य वा गोमयाच्चतुर्गुणस्य वा आज्यस्य ग्रहणम् । ॐदेवस्य त्वेत्यादिकेन पूष्णो हस्ताभ्यां गृह्णामीत्यन्तेन मन्त्रेण पलमितस्याष्टमाषमितस्य वा तदर्द्धं कुशोदकग्रहणम् । गोमूत्रादि कपिलाया ग्राह्यम्, अलाभे गव्यमात्रम्, ततः प्रणवेन हस्तेनालोडनम्, प्रणवेनैव यज्ञियकाष्ठेन निर्मन्थनम्, प्रणवेनाभिमन्त्रणम्, पञ्चगव्येन हरितैः सप्त कुशपत्रैर्दशाहुतिभिर्होमः(१) । ॐइरावती० स्वैः स्वाहा ।

---

"ॐ गन्धद्वारां दुराधर्षां" ( पूर्वं ९५ पत्रे टिप्पण्याम् )

"ॐ आप्यायस्व समेतु ते व्विश्वतः सोम वृष्ण्यम् ॥ भवा व्वाजस्य सङ्गथे" ॥ ( शु० य० सं १२।११२ ) ॥

"ॐ दधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य व्वाजिनः ॥ सुरभि नो मुखा करत्प्र णऽ आयूꣳषि तारिषत्" (शु०य०सं०२३।३२)

"ॐ तेजो ऽसि शुक्रमस्यमृतमसि धाम नामासि प्रियन्देवानामनाधृष्टन्देवयजनमसि" ( शु० य० सं० १।३१ ) ।

"ॐ देवस्य त्वा" पूर्वं १०६ पत्रे द्रष्टव्यः ।

( १ ) अत्र पञ्चगव्यहोमेऽवदान होमसाधनानां स्रुवादीनामभावात् केनावदाय होतव्यमित्यात्याङ्क्षायाम्—

"सप्तावरास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः ।
एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि" ॥

इति । सप्तसङ्ख्या अवरा अधमा येषां दर्भाणां ते सप्तावराः । सप्ताष्टाद्यधिकदर्भसङ्ख्या गृहीतव्या । न तु षट् पञ्चादि न्यूनसङ्ख्येत्यर्थः । तैर्दर्भैरवदाय पलाशपत्रेण हातव्यम् ।

तथा च प्रजापतिः—

"स्थापयित्वा तु दर्भेषु पालाशैः पत्रकैरथ ।
तत्समुद्धृत्य होतव्यं देवताभ्यो यथाक्रमम् ॥

इति दर्भेस्वित्यभिधानात् पात्रस्याधस्तादपि दर्भानास्तृणुयात् ।

इदं पृथिव्यै न मम। "ॐ इदं विष्णुः० सुरे" स्वाहा। इदं विष्णवे न०। "ॐ मानस्तोके० महे स्वाहा" इदं रुद्राय न०। उदकोपस्पर्शः। "ॐ ब्रह्म जज्ञानं० वः" स्वाहा इदं ब्रह्मणे न०। अग्नये स्वाहा-

---

पञ्चगव्यहोममन्त्रस्तु—

"इरावती इदं विष्णुर्मानस्तोकेति शंवती।
एताभिश्चैव होतव्यं हुतशेषं पिबेत् द्विजः॥

इति। इरेत्यादीनि त्रीणि प्रसिद्धानि। शमित्येष शब्दो यस्यामृचि अस्ति सा शंवती "शन्नोदेवीरभिष्टये" इति मयूखे द्रष्टव्या। शंवतीत्यनेन "शन्न इन्द्रा" इति मन्त्रो महार्णवे। एतच्चाग्नये स्वाहेत्यादीनामप्युपलक्षणम्।

अत एव प्रजापतिः—

अग्नये चैव सोमाय सावित्र्यै च तथव च।
प्रणवेन तथा हुत्वा स्विष्टकृच्च तथैव च।
एवं हुत्वा च तच्छेषं पिबेच्चैव समाहितः"

पानस्येतिकर्त्तव्यता—

"आलोड्य प्रणवेनैव निर्मन्थ्य प्रणवेन तु।
उद्धृत्य प्रणवेनैव पिबेच्च प्रणवेन तु"॥

पानमन्त्रः—

"यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके।
ब्रह्मकूर्चो दहेत् सर्वं प्रदीप्ताग्निरिवेन्धनम्"।

ब्रह्मकूर्चस्य कालविशेषे प्रजापतिः—

"चतुर्दश्यामुपोष्याथ पौर्णमास्यां समाचरेत्।"

जाबालिरपि—

"अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः।
पञ्चगव्यं पिबेत्प्रातर्ब्रह्मकूर्चमिति स्मृतम्"॥

इदमग्नये न० । सोमाय स्वाहा इदं सोमाय न० । "ॐ तत्सवितु र्व्यात् स्वाहा इदं सवित्रे न० । ॐ स्वाहा इदं परमात्मने न० । ॐ भूर्भुवः

---

देशविशेषाः—

नदीतीरेषु गोष्ठेषु पुण्येस्वायतनेषु च ।
तत्र गत्वा शुचौ देशे ब्रह्मकूर्चं समाचरेत् ॥

ब्रह्मकूर्चस्य सर्वपापदाहकत्वम्—

"पवित्रं त्रिषु देवेषु देवताभिरधिष्ठितम् ।
वरुणश्चैव गोमूत्रे गोमये हव्यवाहनः ॥
दध्नि वायुः समुद्दिष्टः सोमः क्षीरे घृते रविः"

इति वरुणादिभिरधिष्ठितत्वात्पापदाहकत्वमुपपन्नम् ।

अथ पञ्चगव्यहवनमन्त्राः—

ॐइरावती धेनुमती हि भूत ꣳ० सूयवासिनी मनवे दशस्या ॥ व्व्यस्कभ्नारोदंसी विष्णवे ते दाधर्त्थ पृथिवीमभितो मयूखैः स्वाहा" ( शु०य०सं०५।१६ ) ॥

"ॐइदं विष्णुर्विचक्रमे त्रेधा नि दधे पदम् ॥ समूढमस्य पाꣳ सुरे स्वाहा" ( शु०य०सं०५।१५ ) ॥

ॐमा नस्तोके तनये मा नऽआयुषिमानो गोषुमानो ऽअश्श्वेषु रीरिषः ॥ मा नोव्वीरान्रुद्र भामिनो व्वधीर्हविष्म्मन्तः सदमित्त्वा हवामहे ( शु०य०सं०१६।१६ )

ॐब्रह्मजज्ञानम्प्रथमम्पुरस्ता द्विसीमतऽ सुरुचो व्वेनऽआवऽ ॥ सबुध्न्याऽउपमाऽअस्य व्विष्ठाऽ सतश्श्चयोनिमसतश्श्चव्विवः ।
( शु०य०सं०१३।३ ) ॥

शन्नोदेवीरभिष्टयऽआपो भवन्तु पीतये ॥ शंय्योरभिस्रवन्तुनः ।
( शु०य०सं०३६।१२ )

स्वः स्वाहा ॥ इदं प्रजापतये न मम ॥ ॐअग्नये स्विष्टकृते स्वाहा ॥ इदमग्नये स्विष्टकृते न० ॥ ततो भूराद्यानवाहुतयः ।

ततः संश्रवप्राशनादि प्रणीताविमोकान्तं कृत्वा प्रायश्चित्तहोमस्य साद्गुण्यतासिद्ध्यर्थं ब्रह्मणे पूर्णपात्रं वरो वा दक्षिणां तुभ्यमहं सम्प्रददे । ततः तारकोदये व्रतग्रहणं करिष्ये, इति सङ्कल्पः । द्विजान् पृष्ट्वा कुरुष्वेत्यनुज्ञातः प्रणवेन सर्वं पिवेत् । तस्मिन् दिने उपवासः । अशक्तस्य हविष्यान्नं तत उत्तराङ्गानि कुर्यात् । देशकालौ सङ्कीर्त्यामुकशर्मणो मम जन्मप्रभृतिअद्यदिनं यावदित्यादि ( पूर्वं ८० पत्रे ) निरासार्थमेतावत्सङ्ख्याकान् प्राजापत्यानमुकप्रत्याम्नायद्वारा अहमाचरिष्ये । इति प्रधानसङ्कल्पः ।

प्रक्रान्तप्रायश्चित्तस्योत्तराङ्गानि करिष्ये । इति सङ्कल्पः । व्याहृतिभिराज्यहोमः, प्रायश्चित्ताङ्गविष्णुश्राद्धगोदानं च पूर्ववत् (पत्र१००—११२) कृत्वा ततो "यस्य स्मृत्ये"ति विष्णुं स्मृत्वा मयाऽऽचरितेन प्राच्योदीच्याङ्गसहितेन ( प्रायश्चित्तेन ) पापापहा महाविष्णुः प्रीयतां न मम ।

अथ शक्तौ सत्यां दश दानानि कार्याणि । तानि च—

गोभूतिलहिरण्याज्यवासोधान्यगुडानि च ।
रौप्यं लवणमित्याहुर्दशदाना( नि पण्डिताः ) न्यनुक्रमात् ॥

आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य मया आचरितप्रायश्चित्तस्य साद्गुण्यकामः सुखेन पुण्यलोकप्राप्तिकामो महाविष्णुप्रीतिकामो वा गवादिदशदानान्यहं करिष्ये । इति सङ्कल्प्य ततो

गोदानम् तच्चादि (पूर्वं१०३ पत्रे) गोदानवत् ।

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादिहलोके परत्र च ॥

द्वात्रिंशत्पाणिका गावः(१) ।

अथ भूमिदानम् ।

अमुकसगोत्रं अमुकप्रवरं अमुकशाखाध्यायिनं अमुकशर्माणं ब्राह्मणं भूमिदानप्रतिगृहीतारं त्वामहं वृणे । इति विप्रवरणम् । भूमिदानपात्रभूत ब्राह्मण एष ते पाद्यम्, एष ते अर्घः, पादप्रक्षालनम्, एष ते गन्धः, एतत्ते पुष्पम्, स्वकीयपादौ प्रक्षाल्याचम्य गन्धमाल्यादिभिरर्चनम्, सकुशयवतिलजलदानम्, देशकालसङ्कीर्तनान्ते—

ॐ "सर्वभूताश्रया भूमिर्वराहेण समुद्धृता ।
अनन्त(सस्य)पुण्यफलदा अतः(ततः) शान्तिं प्रयच्छ मे ॥"

इत्युक्त्वा अमुकसगोत्रायामुकशर्मणे ब्राह्मणायामुकसगोत्रोऽमुकशर्माहं आचरितप्रायश्चित्तसाद्गुण्यकामः सुखेन पुण्यलोकप्राप्तिकामो वा इमां निवर्तनमितां भूमिं(२) विष्णुदैवत्यां तुभ्यमहं

---

( १ ) गोनिष्क्रयस्तु—"द्वात्रिंशत्पाणिका गाव"इ ति ( ५५ पत्रे ) कात्यायनेन मूल्यपरिशिष्टेऽप्युक्तं तत्ताम्रमानेन वराटकमानेनाथवा रौप्यरजतसुवर्णमानेन दातव्यम् ।

( २ ) कात्यायनः—

न चोषरां न निर्दग्धां महीं दद्यात् कथंचन ।
न श्मशानपरीतां च न च पापनिषेविताम् ॥

सम्प्रददे । इत्युक्त्वा ब्राह्मणहस्ते कुशादियुक्तजलप्रक्षेपः । "ॐदेव-स्यत्वे"ति "द्यौस्त्वे"ति वा मन्त्रं पठित्वा विप्राय भूमिम् । "ॐप्र-तिगृह्णामी"त्यु क्त्वा भूमेः प्रदक्षिणां कृत्वा प्रतिग्रहणम् । "ॐ

---

पापाः=हिंस्रप्राणिनो व्याघ्रादयः । विष्णुधर्मोत्तरे—

सोषरां तस्कराकीर्णां तथा व्यालवतीं भुवम् ।
न दद्यात्तु द्विजश्रेष्ठो या च सन्धिषु संस्थिता ॥

( १ ) दानप्रतिष्ठायां हिरण्यदक्षिणा ।

प्रसङ्गतः देयहिरण्यादीनां परिमाणं निरुप्यते ।

तच्च दानकमलाकरे शातातपीये कर्मविपाके उक्तम्—

निवर्तनमिता भूमिर्द्रोणत्रय ( द्वय ) मितास्तिलाः ।
कर्षमात्रं सुवर्णं स्यादाज्यं सप्रस्थसाढकम् ॥
वाससो द्वितयं दद्याद् गुडं च पलषष्टिकम् । ६० पलमितम् ।
निष्कत्रयमितं रौप्यं लवणं सार्धखारिकम् ॥

कर्षचतुष्टयमितं रजतं रजतनिष्कः । तत्त्रयमितं १२ कर्षमितं रजतं । १६ पलाधिक—७७ सेटकमितं लवणं सार्धखारिकं भवति । सेटकश्च अशीतिकर्षात्मकः । वस्त्रं च सूक्ष्ममष्टहस्तायतं द्विहस्त-विशालम् ।

सार्धखारीमितं (द्वयं)धान्यं परिमाणं प्रकीर्तितम् । इति ।

मिताक्षराटीकायां दानप्रकरणे पुराणान्तरे—

भूमिरश्वो यथाशक्ति तिलद्रोणो द्वयं तथा ।
गौः सुशीला च दोग्ध्री च कुम्भैराज्यं च पञ्चभिः ॥
कुम्भो द्रोणद्वयम् ।
पलमेकं तु रौप्यस्य सुवर्णस्य सुवर्णकः ॥

सुवर्णकः कर्षः—

दशवस्त्रैर्महादानं दातव्यं च मुमुक्षुणा ॥ इति ।

कोऽदादि''त्यादि "कामैतत्ते" "ॐस्वस्ती" त्यन्तं मन्त्रपठनम् । "दशहस्तेन दण्डेन त्रिंशद्दण्डनिवर्तनमि"ति निवर्तनस्वरूपम् ।

अथ तिलदानम् ।

तत्र विप्रवरणादिदेशकालोच्चारणान्वितेषु वक्ष्यमाणेषु ज्ञेयम् ।
महर्षेर्गोत्रसम्भूताः काश्यपस्य तिलाः स्मृताः ॥
तस्मादेषां प्रदानेन मम पापं व्यपोह(१)तु" ।

इत्युक्त्वा अमुकसगोत्रयेत्यादि अमुककाम इत्यन्तं पूर्ववदुच्चार्य द्रोणत्रयपरिमितानेतांस्तिलान् प्रजापतिदैवत्यान्तुभ्यमहं सम्प्रददे । ब्राह्मणहस्ते जलाद्यन्वितमुष्टिमात्रतिलदानम् । "ॐ देवस्य त्वे"ति मन्त्रान्ते "प्रजापतये"ति तान् "प्रतिगृह्णामी"त्युक्त्वा प्रतिग्रहणम् । "कोऽदादि"त्यादि "ॐ स्वस्ती"त्यन्तं मन्त्रपठनं च ।

अथ हिरण्यदानम् ।

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्ति प्रयच्छ मे(२) ॥

---

( १ ) हेमाद्रौ तु—

"तिलाः पापहराः नित्यं विष्णोर्देहसमुद्भवाः ।
तिलदानादसत्यं मे पापं नाशय केशव" ।

( १०२६ पत्रे ) इति तिलदानमन्त्रः । दानप्रतिष्ठायां हिरण्यं देयम् ।

( २ ) हेमाद्रौ हिरण्यदानमन्त्रः—

"स्वर्णं पवित्रममलं स्वर्णं पापप्रणाशनम् ।
स्वर्णं हि शङ्करो यस्मादतः शान्ति प्रयच्छ मे" ॥ इति

अत्र दानप्रतिष्ठायां रजतदक्षिणा देया ।

इत्युक्त्वा अमुकसगोत्रायेत्यादि अमुककाम इत्यन्तं पूर्ववदुच्चार्य निष्कपरिमितमिदं सुवर्णमग्निदैवतं तुभ्यमहं सम्प्रददे । ब्राह्मणहस्ते जलादियुक्तसुवर्णदानम् । "ॐ देवस्य त्वेति अग्नय" इदं सुवर्णं प्रतिगृह्णामि "कोऽदादि"ति । "निष्कं सुवर्णाश्चत्वार" इति निष्करूपम् ।

अथाज्यदानम् ।

कामधेनोः समुद्भूतं सर्वक्रतुषु संस्थितम् ।
देवानामाज्यमाहारमतः शान्तिं प्रयच्छ मे ॥

अमुकगोत्रायेत्यादि प्रस्थाधिकाढकपरिमितमिदमा(१)ज्यं

---

हिरण्योत्पत्तिः—

"आपो वरुणस्य पत्न्य आसन् ता अग्निरभ्यध्यायत्, ताः सम्भवत्, तस्य रेतः परापतत्, तद्धिरण्यमभव" ( तै० सं० ५।५।४।१ ) दिति । "अग्निरेतसं वै हिरण्यम् ( श० ब्रा० ३।२।४।३ ) इति हिरण्यदानफले श्रुतिः—"हिरण्यदा अमृतत्वम्भजन्ते"

( ऋ० १०।१०७।२ )

हिरण्यधारणमपि श्रुतौ विहितम्—

"न तद्रक्षांसि न पिशाचास्तरन्ति देवानामोजः प्रथमजं ह्येतत् । यो बिभर्ति दाक्षायणं हिरण्यं स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः । ( शु० य० ३४।५१ )

( १ ) आज्यदाने दानप्रतिष्ठायां हिरण्यं दक्षिणा देया । अत्र किमाज्यशब्दो निर्वापादिसंस्कार निमित्त उत जाति निमित्त इति, तत्र संस्कृतऽआज्ये प्रायेणाज्यशब्दप्रयोगदर्शनात् संस्कारनिमित्त इत्येवं प्राप्ते—इदमुच्यते आज्ये विहिते घृतं प्रतीयात् असंस्कृतमेव घृतं गृह्णीयात् जातिनिमित्तोऽयमाज्यशब्दो न संस्कारनिमित्त इत्यर्थः

सोमदैवतं तुभ्यमहं सम्प्रददे । इति जलान्विताज्यपात्रस्य विप्रहस्ते-दानं, "देवस्य त्वे"ति सोमायाज्यं प्रतिगृह्णामि स्वस्तीति पूर्ववत् ।

---

यतोऽसंस्कृतेऽपि जातिमात्रे प्रयोगो लोके वेदे च दृश्यते क्रय्यमाज्यम् क्षीणमाज्यम् तैलमुपसेचने वर्तते जातिं विना लोके वेदे च प्रयोगो नास्ति विना संस्कारं लोके प्रयोगोऽस्ति अतो जातिनिमित्त एवेति, प्रयोजनं श्रौते "आज्येन यूपमनक्ति" (श०ब्रा० ३।८।१।११) "आज्य-मासिच्यौद्गात्रे सौम्यं प्रयच्छति" इत्यादौ पञ्चगव्यादावाज्यग्रहणे आज्यदानादौ च संस्कारा न कर्तव्याः ।

तथा हि जैमिनिः—

"बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः" ( १।४।१० )।

कात्यायनश्च—

"घृतमाज्ये" ( का० श्रौ० १।८।३६ ) इति । सर्वत्र आज्यं सति सम्भवे गव्यं ग्राह्यम् । अत्र कात्यायनः—

"लिङ्गात्" ( का० श्रौ० १।८।३७ ) मन्त्रलिङ्गादाज्यं गव्यं भवति गवां सम्बन्धि भवति किं लिङ्गं "महीनां पयोसी"ति (शु०य० सं० ४। ३) "मह्य इति ह वा एतासामेकं नाम यद् गवा" (श०ब्रा० ३।१।३।६)मिति ।

"नियते सामान्यतः प्रतिनिधिः स्यात्" ( का० श्रौ सू० १।४।२ ) इति सूत्रात्—

"द्रव्ये प्रतिनिधिर्नास्ति विद्यते वा, न विद्यते ।
मानाभावादस्ति कर्मचोदनाऽऽक्षेपिका यतः" ।

( जै० न्यायमाला ६।३।४ ) इति न्यायाच्च गव्याज्याभावे माहि-षाद्यपि ग्राह्यम् । अतश्चोक्तं मण्डनमिश्रैः—

"घृतार्थे गोघृतं ग्राह्यं तदभावे तु माहिषम् ।
आजं वा तदभावे तु साक्षात्तैलं ग्रहीष्यते ॥

अथ वस्त्रदानम् ।

शीतवातोष्णसन्त्राणां लज्जानिर्हरणं परम् । ( लज्जाया रक्षणं परम् ) ॥

---

तैलाभावे ग्रहीतव्यं तैलं जर्तिलसम्भवम् ।
तदभावेऽतसीस्नेहः कौसुम्भः सर्षपोद्भवः ॥
वृक्षस्नेहोऽथवा ग्राह्यः पूर्वालाभे परः परः ।
तदभावे यवव्रीहिश्यामाकान्यतमोद्भ(वः) वम् ।
पिष्टमालोड्य यत्नेन घृतार्थे योजयेत्सुधीः ॥
वृक्षतैलेषु पुन्नागनिम्बैरण्डोद्भवं त्यजेत्" ।

अस्मिन्नेवार्थे भरद्वाजमतम्—

"भरद्वाजोऽन्यथा प्राह घृतप्रतिनिधिं मुनिः ।
गव्याज्याभावतश्छागमहिष्यादेर्घृतङ्क्रमात् ॥
तदभावे गवादीनां क्रमात्क्षीरं विधीयते ।
तदलाभे दधि ग्राह्यमलाभे तैलमिष्यते ।
यत्राज्यमञ्जनाद्यर्थं न लभ्येत कथञ्चन ।
तत्र क्षीरमनादृत्य साक्षात्तैलं ग्रहीष्यते ॥
यत्र मुख्यं दधिक्षीरं तत्रापि तदभावतः ।
अजादेः क्षीरदध्यादि तदभावे तु गोघृतम् ॥
मुख्यासन्नोऽथवा ग्राह्यः कार्यकारणसन्ततौ ।
अत एव घृताभावे पूर्वं दधि ततः पयः ॥

इति ( त्रि० मं० २।४२–५० ) तथा—

"येषां केषांचिदन्येषां हविषामप्यसम्भवे ।
सर्वत्राज्यमुपादेयं भरद्वाजमुनेर्मतात्" इति ।

प्रतिनिध्युपादानेऽपि मुख्यशब्देनैव तदुपादानम् । अत्र कात्यायनः—
"शब्देऽविप्रतिपत्तिः" ( का० श्रौ० सू० १।४।९ ) ।

देहालङ्करणं वस्त्रमतः शान्ति प्रयच्छ मे ॥

अमुकगोत्रायेत्यादि इमे सूक्ष्मे(१) वाससी बृहस्पतिदैवते तुभ्यमहं सम्प्रददे कुशजलान्विताया वस्त्रदशाया विप्रहस्ते दानम्। "ॐ देवस्य त्वेति, बृहस्पतये वाससी प्रतिगृह्णामि कोऽदादि"ति स्वस्ती"त्यन्तं पूर्ववत् ॥

अथ धान्यदानम्।

सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् ॥

---

प्रतिनिधावुपात्तेऽपि विहितद्रव्यवाचिनि शब्देऽविप्रतिपत्तिरवि-परिणामः=अनूहो भवति कुतः प्रतिनिधिः श्रुतद्रव्यबुध्या गृह्यते न तु द्रव्यान्तरबुद्ध्येति।

तथाहि यज्ञपार्श्वपरिशिष्टे वचनम्--

"घृतं वा यदि वा तैलं पयो दधि च यावकम्।
संस्कारयोगादेतेषु आज्यशब्दो विधीयते" इति।

मण्डनश्च--

"मुख्याभिधायकान्मन्त्राननूहेनैव कीर्तयेत् (२।१०८) इति।

विशेषस्तु प्रतिनिधिविषये जैमिनीयपूवमीमांसायाः षष्ठाध्याय-स्य तृतीयः पादः, त्रिकाण्डमण्डनस्य द्वितीयं प्रतिनिधिनिरूपणा-त्मकं काण्डं च द्रष्टव्यम्

(१) अत्र शोभनं वस्त्रं दातव्यं तथाहि श्रुतिः--

"शोभनꣳ ह्येतस्य वासः स यो हैनꣳ शोभनेनोपचरति शोभते हाथ" (श०ब्रा० ३।१।२।३) "वासोदानफलम् "वासोदश्चन्द्रसालो-क्यम्" इति मिताक्षरा (१।२१०)। श्रुतिरपि "वासोदाः सोमप्रति-रन्त आयुः (ऋ० १०।१०।७।२) वासोदाने दानप्रतिष्ठायां हिरण्यं दक्षिणा देया।

प्राणिनां जीवनं यस्मादतः शान्तिं प्रयच्छ मे ॥

अमुकसगो० सार्द्धखारीपरिमितमिदं(१) धान्यं विश्वेदेवादैवतं तुभ्यमहं सम्प्रददे । कुशजलान्वितमुष्टिमात्रधान्यस्य ब्राह्मणहस्ते दानम् । "ॐ देवस्य त्वे"ति विश्वेभ्यो देवेभ्य इदं धान्यं प्रतिगृह्णामि "ॐ कोदादि"त्यादि "स्वस्ती"त्यन्तम् ।

अथ गुडदानम् ।

"यथा देवेषु विश्वात्मा प्रवरश्च जनार्दनः ।
सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥
प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा ।
तथा रसानां प्रवरः सदैवेक्षुरसोत्तमः ॥
मम तस्मात् परां लक्ष्मीं ददस्व गुड सर्वदा" ॥

अमुकसगोत्रषष्टिपलपरिमितमिमं गुडं तुभ्यमहं सम्प्रददे । ब्राह्मणहस्ते सजलगुडदानम् । "ॐदेवस्य त्वे"ति सोमायेमं गुडं प्रतिगृह्णामि "ॐस्वस्ती"त्यन्तं पूर्ववत्(२) ।

---

(१) अत्रेयं परिभाषा—

"सस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते ।
आमान्नं वितुषं ज्ञेयं पक्वमन्नमुदाहृतम् ॥

(गदाधरभाष्ये ४१८) । हेमाद्रौ धान्यदानमन्त्रः—

"धन्यं करोषि दातारमिह लोके परत्र च ।
तस्मात्समुच्यसे धान्यमतः शान्तिं प्रयच्छ मे" इति ।
अत्र दानप्रतिष्ठायां हिरण्यं दक्षिणा देया ।

(२) हेमाद्रौ गुडदानमन्त्रः—

"यस्माद् रसानां प्रवरं इक्षुदण्डसमुद्भवम् ।

अथ रौप्यदानम् ।

"प्रीतिर्यतः पितॄणां च विष्णुशङ्करयोस्सदा ।
शिवनेत्रोद्भवं रूप्यमतः शान्तिं प्रयच्छ मे" ॥

अमुकसगोत्र० निष्कत्रयपरिमितमिदं रूप्यं रुद्रदैवत्यं तु० । ब्राह्मणहस्ते जलान्वितरौप्यदानम् । "ॐ देवस्य त्वे"ति रुद्राय रौप्यं प्रतिगृह्णामि "ॐस्वस्ती"ति पूर्ववत्(१) ।

अथ लवणदानम् ।

यस्मादन्नरसा सर्वे नोत्कृष्टा लवणं विना ।
शम्भोः प्रीतिकरं नित्यमतः शान्तिं प्रयच्छ मे ॥

अमुकसगो० सार्द्धखारीपरिमितमिदं लवणं सौमदैवतं तुभ्य

---

तस्मान्मम परां लक्ष्मीं प्रयच्छ गुड सर्वदा" । इति ॥

अत्र दानप्रतिष्ठायां हिरण्यं दक्षिणा देया ।

आज्यादीनां प्रतिनिधिरप्युक्तः शान्तिरत्ने (११ पत्रे) विष्णुधर्मोत्तरे

यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।
यवाभावे तु गोधूमा व्रीह्यभावे च तण्डुलाः ॥
दध्यलाभे पयः कार्यं मध्वलाभे तथा गुडः ।
घृतप्रतिनिधिं कुर्यात्पयो वा दधि वा नृप ॥

पैठीनसिः—

सर्वालाभे यवप्रतिनिधिः । मैत्रपरिशिष्टे—

घृतमन्यार्थे प्रतिनिधिस्तदलाभे दधि पयो वा" इति ।

(१) हेमाद्रौ रौप्यदानमन्त्रः—

"रुद्रनेत्रसमुद्भूतं लवणं पितृवल्लभम् ।
तस्मादस्य प्रदानेन प्रीणातु मम शङ्करः" ॥ इति ।

अत्रापि दानप्रतिष्ठायां सुवर्णं दक्षिणा देया ।

ब्राह्मणहस्ते जलादिदानम् । "ॐ देवस्य त्वे"ति० । सोमायेदं लवणं प्रतिगृह्णामि जलादेर्हस्ते ग्रहणम् । "ॐ कोदादि"ति स्वस्तीत्यन्तं (१)पूर्ववत् ।

---

( १ ) हेमाद्रौ लवणदानमन्त्रः—

"लवणे वै रसाः सर्वे लवणे सर्वदेवताः ।
सर्वपाकाद्यधिष्ठानं लवणं मेऽस्तु सौख्यदम्" ॥ इति ।

अत्रापि दानप्रतिष्ठायां सुवर्णदक्षिणा ।

तथा हि हेमाद्रिः—

"अन्येषां चैव दानानां सुवर्णं दक्षिणा स्मृता ।
सुवर्णं दीयमाने तु रजतं दक्षिणेष्यते" ॥ इति ।

केचित्तु—

"कानकाश्वतिलागावो दासीरथमहीगृहाः ।
कन्या च कपिलाधेनुर्महादानानि वै दश" ॥

इति कूर्मोक्तानि वा देयानीनि वदन्ति । दशदानपरिमितस्य द्रव्यस्य प्रमाणम् ।

सुवर्णं निष्कमात्रं च घृतं वै प्रस्थमात्रकम् ।
सूक्ष्मं वस्त्रद्वयं चैव गुडमाढकसम्मितम् ॥
सार्द्धखारीद्वयं (मितं) धान्यं लवणं सार्द्धखारिकम् ।
निवर्तनमितां भूमिमेकद्रोणमितास्तिलाः ॥
निष्कत्रयमितं रौप्यं दशदानप्रमाणकम् ।

अथवा यथाशक्त्या तद्दानमूल्यन्देयम् । तत्रेत्थं प्रयोगः । अद्येत्याद्युच्चार्य गो-भू-तिल-हिरण्या-ज्य-वासोधान्य-गुड-रौप्य-लवणेति दशद्रव्यनिष्क्रयभूतं द्रव्यं रजतं चन्द्रदैवतं यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे । निष्क्रये दक्षिणाभावः ।

केचन दशद्रव्यसमुच्चयदानं कुर्वन्ति तत्र ( दशद्रव्यसमुच्चयदान-

पत्रे ) इत्थं प्रयोगः। सर्वदानद्रव्याणि गृहीत्वा सर्वान्मन्त्रान् पठित्वा "एतेभ्यो ब्राह्मणेभ्यो इमानि द्रव्याणि श्रीमहाविष्णुप्रीतिं कामयमानोऽहं सम्प्रददे, न मम" इति दद्यात्। अतः परमाचरितसर्वप्रायश्चित्तसाद्गुण्यार्थं भूरिदानं करिष्ये, इति सङ्कल्प्य "हिरण्यगर्भ" इति ( १२४ पत्रे ) मन्त्रं पठित्वा इमां भूरिदक्षिणां श्री विष्णुप्रीतिं कामयमानः दीनान्धकृपणेभ्यः ब्राह्मणेभ्यो वा सम्प्रददे न ममेति दद्यात्।

दानान्ते प्रार्थना—

प्रायश्चित्तीयपापस्य हारकाः परिकीर्त्तिताः।
ब्रह्मविष्णुशिवादेवा गामेकां ददतो मम॥
पूर्वजन्मसहस्रेषु पूर्वजन्मशतेषु च।
कृतांहो नाशमायातु गामेकान्ददतो मम॥
धेनुके सर्वभूतानामसि त्वं पापनाशिनी।
तस्मात् पापार्णवे मग्नान् समुद्धर नमोऽस्तु ते॥
इमानि दश दानानि दत्तानि मलशुद्धये।
दानेन यज्ञपुरुषः प्रीयताञ्च ममेति च"॥
एतानि दश दानानि सभामध्ये द्विजातिषु।
तानि देयानि श्रद्धातः तस्मात्सर्वप्रदो भवेत्॥

तदसम्भवेऽन्येभ्योऽपि दद्यात्। यन्मया कृतमनुक्तप्रायश्चित्तं तदच्छिद्रमस्तु। अस्त्वच्छिद्रमिति ब्राह्मणाः वदेयुः।

यद्वा—

"मन्त्रहीनं क्रियाहीनं भक्तिहीनं च यत्कृतम्।
ईशप्रसादात्तत्सर्वमच्छिद्रं पूर्णमस्तु मे"।

इति ब्राह्मणप्रार्थना।

"व्रतच्छिद्रं तपच्छिद्रं यच्छिद्रं यज्ञकर्मणि।
सर्वं भवतु तेऽच्छिद्रं जगदीशप्रसादतः"।

इति प्रतिवचनम्।

एवं दश दानानि(१) विधाय गोनिष्क्रयद्रव्यं एकस्मै ब्राह्मणाय

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥
मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर ।
यन्मम त्रुटितन्देव परिपूर्णन्तदस्तु मे ॥

कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वाऽनुसृतस्वभावात् ।
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि ॥

अत्र ब्राह्मणभोजनमपि कार्यम् । तथा हि पराशरः—

"प्रायश्चित्तेषु सर्वेषु कुर्याद् ब्राह्मणभोजनम ।
शक्त्या वित्तानुसारेण प्रायश्चित्तानुरूपतः" ॥ इति ।

(१) अथ दशदानप्रतिग्रहे प्रायश्चित्तमाह हेमाद्रिः। कूर्म्मपुराणे-

प्रायश्चित्ते व्रते शान्तौ प्रतिष्ठासु मुनीश्वराः ।
तटाकारामग्रामाणां तत्तत्पुण्यप्रपूर्त्तये ॥
दशदानानि विप्रेभ्यः देयानि फलसङ्ख्यया ।

दशदानानि यथा—

गोभूतिलहिरण्याज्यवासोधान्यगुड़ानि च ।
रजतं लवणञ्चैव दशदानान्यनुक्रमात् ॥

एतत्प्रतिग्रहे प्रायश्चित्तम् । सुखाप्तये तत्तदङ्गत्वाच्च दोषबाहुल्यम् । अतः प्रतिग्रहीतॄणां प्रायश्चित्तमाह । लैङ्गे—

धेनुप्रतिग्रहे भूमेश्चान्द्रमेकं विशोधनम् ।
तिलप्रतिग्रहे तप्तकृच्छ्रत्रयमुदीरितम् ॥
पराकं मुनिभिः प्रोक्तं सुवर्णस्य प्रतिग्रहे ।
रजतस्य विशुद्ध्यर्थं यावकं कृच्छ्रमीरितम् ॥
लवणे पञ्चसाहस्रं जपेद्देवीमनुक्रमात् ।

एतत्प्रायश्चित्तं यस्य दानस्य यावत्परिमाणमुक्तं परिभाषायां

दद्यात् । न बहुभ्यः तदुक्तमङ्गिरसा—

बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः ।
एतानि तु विभक्तानि दातारं पातयन्ति हि ॥

बहुभ्यः प्रत्यत्तैकगोदानस्य प्रतिषिद्धत्वात् । इदं च गोवृषदानमेकप्राजापत्यकृच्छ्रूरूपप्रायश्चित्तदाने ज्ञेयम्(१) ।

इति स्मार्त्तोल्लासे सर्वप्रायश्चित्तप्रयोगः ।

---

तावत्पूर्णञ्चेदेतदुक्तं प्रायश्चित्तं, असामर्थ्यञ्चेत् तत्र द्रव्यस्य प्रतिग्रहे स्नात्वा सहस्रं जपेत् ।

(१) अथ विप्रस्त्रियाः प्रायश्चित्तप्रयोगः ॥

स्त्रीणां होमः कृताकृतः । करणपक्षे विधवायाः क्षौरान्ते पूर्ववत्कृत्वा अमन्त्रकाणि दशस्नानानि । सधवायास्तु सङ्कल्पान्ते दन्तधावनं कृत्वा तूष्णीं दशस्नानानि ॥ वस्त्रपरिधानान्ते विष्णुश्राद्धगोदाने कृत्वा "प्रायश्चित्तहोमार्थमाचार्यं त्वां वृणे" इति विप्रं वृत्वा पूर्ववद्विप्रद्वारा सर्वं पूर्वाङ्गं कारयित्वा स्वयं पञ्चगव्यं तूष्णीं प्राश्य मुख्यप्रत्याम्नायद्रव्यं विसृज्योत्तराङ्गानि कारयेत् ॥ होमाभावपक्षे दशविधस्नानान्ते विष्णुश्राद्धगोदाने कृत्वा विप्रेण पञ्चगव्यं कारयित्वा तूष्णीं प्राश्य प्रायश्चित्तद्रव्यं सङ्कल्प्य दत्वोत्तराङ्गविष्णुश्राद्धगोदानदशदानानि कुर्यात् ॥

अथ शूद्रस्य सङ्कल्पान्तमविकृतं प्राग्वत् । ततः क्षौरान्ते अमन्त्रकदशस्नानानि वस्त्रतिलकधारणान्ते विष्णुश्राद्धगोदाने कृत्वा विप्रद्वारा पञ्चगव्यं कारयित्वा स्वयं तूष्णीं पिबेत् । शूद्रेण कपिलायाः पञ्चगव्यानि न पेयानि । नास्य विप्रद्वारापि होमः । प्रायश्चित्तद्रव्यं सङ्कल्प्य दत्वा उत्तराङ्गविष्णुश्राद्धगोदानानि दश दानानि कुर्यात् ॥

इति स्त्रीशूद्रप्रयोगः ॥

अथ गोवधाद्येकैकपापे प्रायश्चित्तप्रयोगः । पर्षदं प्रदक्षिणीकृत्य साष्टाङ्गं प्रणमेत् । विप्रैः "किं ते कार्यमि"त्यादिपृष्टे गोवृषनिष्क्रयं सङ्कल्प्य निधाय "मयाऽमुकगोवधः कृतोऽथवा पलाण्डुगृञ्जनादिभक्षणं कृतं यद्वाऽमुकस्त्रीगमनं कृतं तत्प्रायश्चित्तमुपदिशन्तु भवन्तः" इति यथापापमुच्चार्य स्पष्टं वदेत् । ततः "सर्वे धर्मविवेक्तार" इत्यादि । कर्त्रा निबन्धपुजाऽनुवादकपूजने कृते सभ्यानुवादकमुखेन प्रायश्चित्तं कथयेयुः । त्वया अमुकगोवधः कृतस्तत्प्रायश्चित्तं त्रैमासिकव्रतं सप्तदशप्राजापत्यप्रत्याम्नायद्वारा वा सप्तदशगोदानतन्मूल्यदानेन वा पूर्वोत्तराङ्गसहितं त्वयाऽऽचरितव्यं तेन तव शुद्धिर्भविष्यति, इत्यादि । तथाऽभक्ष्यभक्षणे—त्वयाऽमत्या अभ्यासेन पलाण्डुगृञ्जनं कुक्कुटमांसं वा भक्षितं तत्प्रायश्चित्तं यतिचान्द्रायणं पुनः संस्कार-सहितं प्राच्योदीच्याङ्गसहितमाचरणीयं तेन तव शुद्धिर्भविष्यती-त्यादि ॥ एवमगम्यागमनादावूह्यम् । ततः कर्त्ता देशकालौ सङ्कीर्त्य पर्षदुपदिष्टं गोवधप्रायश्चित्तं त्रैमासिकममुकप्रत्याम्नायेन प्राच्योदी-च्याङ्गसहितमहमाचरिष्ये । ततो वपनदन्तधावनदशविधस्नानपूर्वाङ्ग-विष्णुश्राद्धगोदानाज्यहोमपञ्चगव्यप्राशनान्ते यथासङ्कल्पितं मुख्य-प्रायश्चित्तं कृत्वोत्तराङ्गानि कुर्यात् । इदं सामान्यम् । ततो विशेषोक्तं स्वामिमते गोदानपार्वणश्राद्धादि । एवमभक्ष्यभक्षणेऽपि पलाण्डुगृञ्ज-नकुक्कुटमांसादिभक्षणजनितपातकनिरासार्थं पर्षदुपदिष्टं पुनः संस्कारसहितं यतिचान्द्रायणममुकप्रत्याम्नायेन प्राच्योदीच्याङ्गस-हितमाचरिष्ये । इति सङ्कल्प्य क्षौरादिपञ्चगव्यप्राशनादि पूर्ववत्कृत्वा चान्द्रायणप्रत्याम्नायपुनरुपनयनं च कृत्वोदीच्याङ्गानि कुर्यात् । एव-मगम्यागमनादौ द्रष्टव्यम् । रहस्यप्रायश्चित्ते तु न पर्षदुपस्थानं सभ्यानुवादकपूजनादिकं किन्तु तत्प्रायश्चित्तं स्वयमेव ज्ञात्वाऽथवा व्याजान्तरेण किञ्चित्पृष्ट्वा रहस्योक्तं प्रायश्चित्तं स्वयमेव रहसि सङ्क-ल्प्य महच्चेत्क्षौरसहितमन्यथा क्षौररहितमाचरेदिति ॥

अथ सुवासिनीनां प्रायश्चित्ताचरणे मृत्तिकास्नानशालाग्निहोम-पञ्चगव्यहोमाद्याचरणं ब्राह्मणेन कारयेत्। वपननान्दीश्राद्धवैष्णवश्राद्धानि न सन्त्येव, पापनिवेदने प्रकीर्णकेषु परमात्मस्मरणराहित्यान्तं मुक्त्वा स्वार्थपरार्थधर्मक्रियानुकूलक्रियानिरोधन-क्रियानिन्दन-भर्तृक्रियानिन्दन—भर्तृवच उल्लङ्घन—श्वश्रूश्वसुरदेवरादिवचउल्लङ्घन-सावित्रीव्रतराहित्य-साभिलाषपरपुरुषनिरीक्षण-सम्भाषण-परिहसन-सहयानासनशयनावस्थानाज्ञातपरपुरुषसंसर्ग-पैतृकव्रतोपवासादिनिषिद्धदिनसङ्गम-रहोऽवस्थान-भर्तृदेवतासूर्यादिग्रहादर्शन-भर्तृसम्भाषणराहित्य-गृहोपकरणादिद्रव्यादर्शनोदक्याशूद्रग्रामान्त्यजस्पर्शन-चाण्डालनिरीक्षण-वाक्यश्रवण-प्रतिकूलवचन भर्तृश्वसुरश्वश्रूदेवाग्निराहित्य शिशुताडन-क्षुत्परीतशिशुस्तन्याप्रदान-भर्तृश्वसुरादिमैत्रीभेदन-पङ्क्तिभेदव्यञ्जनादिप्रदान-भर्तृवशीकरणदोषचिन्तन-देवब्राह्मणगुरुदूषण-भर्तृप्रवासकालद्विवारभोजन-परगृहयान-देहलीवास-परगृहवास-कुड्यजालवातायनादिविचरण-रथ्योपसर्पण-समाजोत्सवदर्शन-जननीगृहयान-दिवास्वाप-भर्तृश्वसुरश्वश्रूदेवरादिसमानासन-शय्याद्यवस्थान-तदभिवादनराहित्य-धान्यगृहोपकरणादिविक्रय-भर्त्रननुज्ञातव्रतोपवासनियमाचरण-देहलीगृहाद्यलङ्कारणराहित्य-सदा निष्ठुरभाषण-वृथाक्रोधनबोधनोरःशिरोमुखताडन-क्षुधित दासीदासपशूपेक्षण-भक्ताप्रदान-ताम्बूलाञ्जनहरिद्रालेपनतिलकमङ्गलसूत्रादिराहित्यकेशप्रसाधनराहित्य-सदामलिनवस्त्रधारण-स्वेच्छाकामुकत्व-भर्तृत्वङ्कारहुङ्कारतिरस्कार-स्वयं प्रथमभोजन शयनप्रबोधन-भर्तृचित्तारञ्जनादिप्रकीर्णकानां, ज्ञानतोऽज्ञानतश्चेत्यादि यथा यथं अनुवादः कार्यः।

अथ विधवानां पापनिवेदने पापविशेषः कथ्यते। सुवासिनीत्व प्रयुक्तस्वार्थपरत्वभर्तृचित्तारञ्जनान्तं मुक्त्वाऽस्नानभोजन द्विवारभोजन-पर्युषितान्नभोजन-कांस्यपात्रभोजन-रात्रिभोजन-पुत्राद्युच्छिष्टान्न-

अथ व्रताङ्गभूतयमनियमधर्माः कथ्यन्ते । तदुक्तं स्मृतिसङ्ग्रहे—

"ब्रह्मचर्यं-दया-क्षान्तिर्दानं (१) सत्यम(कौटिलम्)कल्कता।
अहिंसाऽस्तेयमाधुर्ये दमश्चेति यमा दश ॥

---

भोजन-मदकरद्रव्यभक्षण-ताम्बूलचर्वण-वलीवर्दारोहण-कुसुम्भरक्त-चित्रवस्त्रादिधारण-तिलकाञ्जनगन्धकस्तूरीकर्पूरघुसृणसुरभिपुष्पादि-धारण-भर्तृस्मरणतर्पणादिराहित्य-भर्तृनिन्दाश्रवण-स्वशरीरपोषणादिप्रकीर्णकानां यथायथं निवेशः । दासीकुलटावेश्यामैत्रीकरण-सत्कथाश्रवणराहित्य-भ्रातृभार्यादिमैत्रीभेदन-स्वाधीनपरमैथुनशब्दश्रवण-वीक्षण खट्वाशयनयानारोहणोष्णोदकस्नान-तीर्थाचरणराहित्य-भर्तृनिन्दाश्रवण-स्वशरीरपोषणादि प्रकीर्णकानां च यथायथं निवेशः ; ज्ञानतोऽज्ञानतश्चेति समानम् । अनुवादकवचने-अस्नानभोजनादिस्वशरीरपोषणादिप्रकीर्णकेभ्य इति ज्ञानतोऽज्ञानतश्चेत्यनुवादः। विधवानां प्रायश्चित्ताचरणे शिरोमात्रवपनं पाणिपादनखनिकृन्तनं मृत्तिकास्नानं दशविधस्नानानि च सा स्वयमेव कुर्यात् । नान्दीश्राद्धं वैष्णवश्राद्धं च अस्त्येव, पञ्चगव्यहोमं ब्राह्मणेन कारयेत् शेषमन्यत्समानमिति हेमाद्रिः ।

(१) सत्यवदने फलश्रुतयः—

"एकं ह वै देवा स व्रतं चरन्ति सत्यमेव; तस्मादेषां जितमनपजय्यं, तस्माद्यशः एवं ह वा अस्य जितमनपजय्यमेवं यशो भवति य एवं विद्वान्सत्यं वदति" ( श० ब्रा० ३।३।३।८ ) "सत्यसंहिता वै देवाः" ( ऐ० ब्रा० १।१।६ ) ।

"द्वयं वा इदं न तृतीयमस्ति सत्यं चैवानृतञ्च सत्यमेव देवा अनृतं मनुष्याः" ( श० ब्रा० १। प्र १। ब्रा १।४ ) ।

"तस्य वा एतस्याऽग्न्याधेयस्य सत्यमेवोपचारः स स यः सत्यं वदति यथाग्निꣳ समिद्धं घृतेनाभिषिञ्चेदेवꣳ हैनꣳ स उद्दीपयति

स्नानं मौनोपवासेज्यास्वाध्यायोपस्थनिग्रहाः ।
गुरूणां शुश्रुषा शौचाक्रोधाऽप्रमदता दश(१)" ॥

कात्यायनः–

"सदो(२)पवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्" ॥

---

तस्य भूयो भूय एव तेजो भवति श्वः श्वः श्रेयान् भवत्यथ योऽनृतं वदति यथाग्निर्ठं० समिद्धं तमुदकेनाभिषिञ्चेदेवर्ठं० हैनर्ठं० स जासयति तस्य कनीयः कनीय एव तेजो भवति श्वः श्वः पापीयान् भवति तस्मादु सत्यमेव वदेत्" । (श० ब्रा० २।२।२।१९ मूलपुस्तके)

(१) "नियमा गुरुशुश्रूषा शौचाक्रोधाप्रमादता" इति (या० स्मृ० ३।११३) पाठः ।

(२) "तस्माद्यज्ञोपवीतीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्या अजिनं वा दक्षिणत उपवीय" (तै० आ० २।१) इति श्रुतेः । "उपवीतिनः" (का० श्रौ० १।७।२४) "यज्ञोपवीतम्" (द्रा० गृ० १।१।४) इति सूत्राभ्यां यज्ञोपवीतस्य कर्माङ्गत्वं=क्रत्वर्थत्वम् । एवं च कर्मकालादन्यत्र तस्य धारणं न प्राप्नोति तत्राह "सदोपवीतिनेति" सर्वदा उपवीतिना सर्वदा बद्धशिखेन च भवितव्यम् । अनेन दधिखादिरादिवत् (जै० ४।३।३) यज्ञोपवीतधारणस्य शिखाबन्धनस्य च पुरुषार्थतोक्ता, तदत्र शिखाबन्धनोपवीतधारणयोः संयागपृथक्त्वन्यायेन क्रतुपुरुषोभयार्थत्वमवगम्यते ।

संयोगपृथक्त्वन्यायः—

"एकस्य तूभयत्वे संयोगपृथक्त्वम्, शेष इति चेत्, नार्थपृथक्त्वात्" (जै० सू० ४।३।५–७) इति । न्यायमाला च—

"दध्नात्विन्द्रियकामस्य नित्येन्यदुत तद्दधि ।
अन्यत्स्यात्पूर्वन्मैवं संयोगस्य पृथक्त्वतः" (न्याय०मा०४।३।३) इति

भृगुः—

"मन्त्रपूतं स्थितं काये यस्य यज्ञोपवीतकम् ।
नोद्धरेच्च ततः प्राज्ञो य इच्छेच्छ्रेय आत्मनः ॥
सकृदुत्तारणात्तस्य प्रायश्चित्ती भवेद्द्विजः ।
तैत्तरीयाः कठा काण्वाश्चरका वाजसनेयिनः(१) ॥

---

एवं च क्रतुपुरुषोभयार्थत्वे सति विशिखेन व्युपवीतिना च कर्मणि क्रियमाणे कर्मणोऽपि वैगुण्यं भवति । एवं च क्रतुपुरुषोभयार्थापचारप्रयुक्तं प्रायश्चित्तद्वयमत्र बोध्यम् । तद्यज्ञोपवीतं "सौत्रम्" (द्रा० गृ० १।२।५) कर्पाससूत्रकृतं रज्जुर्वासो वा स्मृत्यन्तराच्छेषावगतिः । "कौशं वेति" (द्रा० गृ० सू० १।१।६) कुशविकृतं वा भवति । तथा मनुः—

"कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।

शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रजम्" (२।४४) । त्रिवृन्नवसूत्रजम् । नव वै त्रिवृदिति श्रुतेः । पैठीनसिरपि-कार्पासञ्चोपवीतं सर्वेषामिति । विष्णुरपि-कार्पासशाणाविकान्युपवीतानि वासांसि चेति । "ग्रीवायां प्रतिमुच्य दक्षिणं बाहुमुद्धृत्य यज्ञोपवीती भवति" (द्रा० गृ० सू० १।१।७) इति सूत्रात् "उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे" (अम० २।७।४९) इति कोशाच्च दक्षिणबाहुना उद्धृतं सव्यांशस्थितं स्मृत्युक्तरीत्या निर्मितं यज्ञोपवीतमित्युच्यते ।

यज्ञोपवीतनिरुक्तिः स्मृतिसारे—

"यज्ञार्थः परमात्मा य उच्यते चैव होतृभिः ।
उपवीतं ततोऽस्येदं तत्स्याद्यज्ञोपवीतकम्" । इति ।

(१) शुक्लयजुर्वेदस्य पञ्चदश भेदाः सन्ति । (१) काण्वा (२) माध्यन्दिनाः (३) जाबाला (४) बौद्धायनाः (बौ (बु) धेया)

कण्ठादुत्तार्य सूत्रं तु कुर्युर्वै क्षालनं द्विजाः ।
बह्वृचाः सामगाश्चैव ये चान्ये यजुः शाखिनः ।
कण्ठादुत्तार्य सूत्रं चेत्पुनरर्हति संस्क्रियाम्" ।
"पुनः संस्क्रिया"मिति मन्त्रेण उपीतान्तरधारणमेव ॥

---

( ५ ) शाफेया ( ६ ) स्तापनीयाः ( ७ ) कपोलाः ( ८ ) पौढ्र (एडर) वत्साः ( ९ ) आवटिकाः ( १० ) परमावटिकाः ( ११ ) पाराश (रीयाः ) राः ( १२ ) वै ( ए ) नेया ( १३ ) वैधेयाः ( १४ ) औधेया ( १५ ) गालवाश्चेति, एते सर्वे वाजसनेयिन इति व्यपदिश्यन्ते । एतद्वेदस्य मानमुक्तं चरणव्यूहे—

"द्वे सहस्रे शतं न्यूने मन्त्रे वाजसनेयके ।
ऋग्गणः परिसंख्यातं ततोऽन्यानि यजूंषि च ।
तावन्मानेन सङ्ख्यातं बालखिल्यं सशुक्रियम् ।
ब्राह्मणन्तु समाख्यातं प्रोक्तमानाच्चतुर्गुणम्" इति ॥

वाजसनेयिनां ब्राह्मणं शतपथसंज्ञकं तच्चार्वाचीनमिति भट्टोजिदीक्षितमतं सिद्धान्तकौमुद्यां—"पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" (४।३।१०५) इति सूत्रे भाल्लविनः शाट्यायनिन इत्युदाहृत्य पुराणेति किम् । याज्ञवल्क्यानि ब्राह्मणानि इति प्रत्युदाहृतं, तत्स्वारस्याद्याज्ञवल्क्यो न पुराणो मुनिरिति प्रतीयते तथापि "शाट्यायनि तुल्यकालत्वाद् याज्ञवल्क्यादिभ्यः प्रतिषेध तद्विषयता च नेति" वचनमेतत्सूत्रभाष्ये पतञ्जलिनोपन्यस्तम् । तत्स्वारस्येन याज्ञवल्क्यः पुराण एवेति लभ्यते, अन्यथा वचनारम्भो व्यर्थः स्यात् पुराणपदेनैव तद्व्यावृत्तेः सिद्धत्वात् । याज्ञवल्क्यस्य वैशम्पायनान्तेवासित्वेन शाट्यायनादितुल्यकालभवत्वाच्च । स्पष्टं चेदमत्रैव सूत्रे शब्देन्दुशेखरे इति माध्यन्दिनशाखाप्रकाशे ।

वराहः—

"सुस्नातः सम्यगाचान्तः कृतसन्ध्यादिकक्रियः ।
कामक्रोधविहीनश्च पाखण्डस्पर्शवर्जितः ॥
जितेन्द्रियः सत्यवादी सर्वकर्मसु शस्यते ।"

कात्यायनः—

"ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात् सर्वकर्मसु पावनम्" ॥

हेमाद्रिः—

"प्रागग्रमुदगग्रं वा धौतं वासः प्रसारयेत् ।
पश्चिमाग्रं दक्षिणाग्रं पुनः प्रक्षालनाच्छुचिः" ॥

आपस्तम्बः—

"आर्द्रवासास्तु यः कुर्यात् जपहोमप्रतिग्रहान् ।
सर्वं तद्राक्षसं विद्यात् बहिर्जानु च यत् कृतम्" ॥

विष्णुपुराणे—

"होमे दैवार्चनाद्यासु क्रियास्वाचमने तथा ।
नैकवस्त्रः प्रयुञ्जीत (प्रवर्तेत) द्विजवाचनके जपे" ॥
द्विजवाचनके स्वस्तिवाचनादौ ।

व्याघ्रपादः—

"नैकवस्त्रो द्विजः कुर्याद् भोजनं तु सुरार्चनम् ।
तत्सर्वमसुरेन्द्राणां ब्रह्मा भागमकल्पयत्" ॥

छागलेयः—

"सव्यादंसात्परिभ्रष्टं कटिदेशधृताम्बरम् ।

एकवस्त्रं तु तद्विद्यात् दैवे पित्र्ये च वर्जयेत्" ॥

गृह्यरेणुः—

"एकवस्त्रा तु या नारी मुक्तकच्छा व्यवस्थिता ।
न साऽधिकारिणी तत्र दैवे पित्र्ये च कर्मणि" ॥

पारस्करगृह्ये—

"एकं चेत्पूर्वस्योत्तरवर्गं प्रच्छादयीत" ( २।६।२२ )

मार्कण्डेयः—

"चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् ।
एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम्" ॥

हारीतः—

"आचामेत्प्रयतो नित्यं पवित्रेण द्विजोत्तमः ।
नोच्छिष्टं तु भवेत्तं तु भुक्तशेषं तु वर्जयेत्" ॥

(१)वसोः पवित्रमित्यनेन धारणम् । पवित्रेण पवित्रयुक्तपाणिरित्यर्थः । येन तु पवित्रेण सह भोजनं कृतं तदेवोच्छिष्टं तत्त्याज्यं नान्यत् ।

प्रयोगपारिजाते—

"नित्ये नैमित्तिके वापि कर्मोपक्रमणे द्विजः ।
धृतं पवित्रं कर्मान्ते ग्रन्थिं मुक्त्वा तु तत्त्यजेत्" ॥

शातातपः—

"जपे होमे तथा दाने स्वाध्याये पितृतर्पणे ।
"अशून्यं तु करं कुर्यात् सुवर्णरजतैः कुशैः" ॥

---

( १ ) वसोः पवित्रमसि संहितायां (शु० य० सं० १।२) द्रष्टव्यः ।

काश्यपः—

"स्नाने दाने जपे होमे स्वाध्याये पितृतर्पणे॥

सपवित्रौ (२) सदर्भौ वा करौ कुर्वीत नान्यथा" ॥

---

(२) अथ स्नानजपहोमादेर्दर्भपाणिना कर्त्तव्यत्वात्प्रसङ्गेन संक्षिप्य दर्भविधिरुच्यते । तत्र हारीतः—

"अच्छिन्नाग्रान् सपत्रांश्च समूलान् कोमलान् शुभान् ।

पितृदेवजपार्थं तु समादद्यात् कुशान् द्विजः ॥

कुशहस्तेन यज्जप्तं दानं चैव कुशैः सह ।

कुशहस्तस्तु यो भुङ्क्ते तस्य सङ्ख्या न विद्यते" ॥ इति ।

पुराणेऽपि—

"कुशपूतं भवेत् स्नानं कुशेनोपस्पृशेत् द्विजः ।

कुशेन चोद्धृतं तोयं सोमपानेन सम्मितम्" ॥ इति ।

गोभिलोऽपि—

"कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः ।

कुशाग्रे शङ्करं विद्यात् त्रयो देवा व्यवस्थिताः" ॥ इति ।

कौशिकः—

"शुचौ देशे शुचिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ।

ॐकारेणैव मन्त्रेण कुशाः स्पृश्या द्विजोत्तमैः" ॥ इति ।

उत्पाटनमन्त्रस्तु—

"विरञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ।

नुद पापानि सर्वाणि दर्भ स्वस्तिकरो मम" ॥ इति ।

वर्णभेदेन विनियोगभेदमाह कात्यायनः—

"हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः ।

समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः" ॥

( का० स्मृ० २. ३. ) इति ।

कुशाभावे शङ्ख —

"कुशाभावे द्विजः श्रेष्ठः काशैः कुर्वीत यत्नतः ।
तर्पणादीनि कर्माणि काशाः कुशसमाः स्मृताः" ॥

यमोऽपि—

"कुशाः काशा यवा दूर्वास्तथा व्रीहय एवच ।
बल्वजाः पुण्डरीकाश्च सप्तधा वर्हिरुच्यते" ॥ इति ।

ब्रह्मपुराणे—

"काशाः कुशा बल्वजाश्च तथान्ये तीक्ष्णरोमशाः ।
मौञ्जाश्च शाड्वलाश्चैव षड्दर्भाः परिकीर्तिताः" ॥

इति दर्भाणां षड्विधत्वमुक्तम् ।

वर्ज्यानाह हारीतः—

'चितौ दर्भाः पथि दर्भा ये दर्भायज्ञभूमिषु ।
स्तरणासनपिण्डेषु षट् कुशान् परिवर्जयेत् ॥
ब्रह्मयज्ञषु ये दर्भा ये दर्भाः पितृतर्पणे ।
हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते ॥
अपूता गर्हिता दर्भा ये संच्छिन्नानखैस्तथा ।
क्वथितानग्निदग्धांश्च कुशान् यत्नेन वर्जयेत्' ॥
पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम् ।
मूत्रोच्छिष्टैर्धृता ये च त्यागस्तेषां विधीयते' ।

कुशोत्पाटने कालनियममाह हारीतः—

"मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः" इति ।

यातयामं जीर्णं तत् यन्न भवति तदयातयामं सवीर्यं कार्यक्षममिति यावत् । "मासे नभस्यमावास्या" एतस्माद्वचनात् भाद्रपदामावास्यायामाहृतानामेव दर्भाणामयातयामतया पुनः पुनर्नियो-

कात्यायनः—

"यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते ॥
दक्षिणस्तत्र विज्ञेयः कर्मणां (णः) पारगः करः ।
यत्र दिङ्नियमो न स्याज्जपहोमादिकर्मसु ॥
तिस्रस्तत्र दिशः प्रोक्ता ऐन्द्री सौम्या पराजिता" ॥
ऐन्द्री पूर्वा, सौम्योदीची, पराजिता ऐशानी, इति ।

परिशिष्टे कात्यायनः—

"पित्र्यमन्त्रानुद्रवणे आत्मालम्भे ( अवेक्षणे ) ऽधमेक्षणे ।
अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे ॥
मार्जारमूषकस्पर्शे आक्रुष्टे क्रोधसम्भवे ।

---

ज्यत्वमिति बहुसम्मता व्यवस्था । शङ्खोऽपि—
'दर्भाः कृष्णाजिनम्मन्त्रा ब्राह्मणा(हविरग्नयः)श्च विशेषतः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः' ॥ इति ।

पवित्रधारणे फलमाह मार्कण्डेयः—
'कुशपाणिः सदा तिष्ठेत् ब्राह्मणो दम्भवर्जितः ।
स नित्यं हन्ति पापानि तूलराशिमिवानलः' ॥ इति ।

पवित्रप्रकारमाह कात्यायनः—
'अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्' ॥ इति
( का० स्मृ० १. २. १० )

अत्रिः—
'ब्रह्मयज्ञे जपे चव ब्रह्मग्रन्थि विधीयते ।
भोजने वर्त्तुलः प्रोक्त एवं धर्मो न हीयते' ॥ इति ।

निमित्तेष्वेषु सर्वत्र कर्म कुर्वन्नपः स्पृशेत्"(१) ॥

अनुद्रवणमुच्चारणम् । आत्मालम्भो हृदयस्पर्शः । अवेक्षणमपि तस्यैव । अपां स्पर्शनमेवाचमनमिति हेमाद्रिणा व्याख्यातम् ।

( १ ) कौषीतकिगृह्ये—"रौद्रं तु राक्षसं पित्र्यामासुरं चाभिचारिकम् । उक्त्वा मन्त्रं स्पृशेदप आलभ्यात्मानमेव च" इति ( कौ० गृ० ५ पत्रे ) ।

अत्र मन्त्रोच्चारणात्मालम्भावेक्षणानि यज्ञादौ विहितान्येव ग्राह्याणि न लौकिकानि, अन्तरङ्गत्वेन तन्निषेधस्यैवोचितत्वात् । प्रहासे महतिहासे न स्मितमात्रे, मार्जारस्पर्शे मार्जारकृत एव, स्वयं कृते तु स्नानस्योक्तत्वात्, इत्युक्तमाचारादर्शे । आक्रुष्टे परुषभाषणे क्रोधसम्भवे मानसिककोपे । अपः स्पृशेदित्यनेन अपां स्पर्शनमेव विवक्षितं नत्वाचमनमिति भर्तृयज्ञपितृभूतिकर्कोपाध्यायवासुदेवगर्गश्रीअनन्तदेवयाज्ञिकादयः सर्वे कल्पसूत्रभाष्यकारा व्याख्यातवन्तः सम्प्रदायादयः पद्धतिकाराश्च । अत्र सर्वेषु वाक्येषु अपः स्पृशेदिति पाठात् अपः स्पर्शो जलस्पर्श एव याज्ञिकसम्प्रदायाविरुद्धः येषूतूपस्पृशेदिति पाठस्तत्र तूपस्पर्शनमाचमनमित्युक्तमाचारादर्शे ।

अत्र कात्यायनः—

"रौद्रꣳ० राक्षसमासुरमाभिचारणिकं मन्त्रमुक्त्वा पित्र्यमात्मानं चालभ्योऽपस्पृशेदप उपस्पृशेदप" ( का० श्रौ० सू० १।१०।१४ ) इति ।

क्वचिच्च श्रुतिरपि अपामुपस्पर्शनं दर्शयति—

"यज्ञस्य यद्रुद्रियं तदेवैतन्निर्मिमीतेऽथाप उपस्पृशति शान्तिरापस्तदद्भिः शमयतीति"( श० ब्रा० १।७।४।९ ) ।

पुनरेत्याप उपस्पृशति रुद्रियेणेव वा एतदचारिषुः शान्तिराप स्तदद्भिः शान्त्या शमयन्त इति ।

वशिष्ठः—

"क्षुते निष्ठीविते सुप्ते परिधानेऽश्रुपातने ।
पञ्चस्वेतेषु चाचामेच्छ्रोत्रं वा दक्षिणं स्पृशेत्" ॥

पराशरः—

"(१)क्षुते निष्ठीविते चैव दन्तश्लिष्टे तथाऽनृते ।
पतितानां च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥
प्रभासादीनि तीर्थानि गङ्गाद्याः सरितस्तथा ।
विप्रस्य दक्षिणे कर्णे सन्तीति मनुरब्रवीत् ॥
आदित्यो वरुणः सोमो वह्निर्वायुस्तथैव च ।
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति देवताः" ॥

इति संक्षिप्तधर्माः, विशेषस्तु ग्रन्थान्तरेऽवगन्तव्यः विस्तरभयादिह न लिख्यते ।

अथ नान्दीश्राद्धम् । तच्च त्रिविधं विवाहादिनित्यनैमित्तिकम्, पुत्रजन्माद्यनियतनिमित्तम्, अग्न्याधानादिनिमित्तं चेति । तत्र विवाहादिनिमित्तं प्रातः कार्यम् । अग्न्याधानादिनिमित्तं त्वपराह्णे कार्यम् । तदाह गालवः—

"पार्वणं चापराह्णे तु वृद्धिश्राद्धं तथाग्निकमि"ति ।

---

(१) क्षुते कृते, निष्ठीवने=श्लेष्मादिनिरसने कृते, दन्तोच्छिष्टे=दन्तलग्नोच्छिष्टे, तथा अनृते=मिथ्यावचने कथिते, पतितानां सम्भाषे च दक्षिणं कर्णं स्पृशेत् । स खल्वयं कर्मकाले विधिः । दक्षिणकर्णस्पर्शे हेतुमाह गृह्यासंग्रहकारः—

"मरुतः सोम इन्द्राग्नी मित्रावरुणौ तथैव च ।
एते सर्वे च विप्रस्य श्रोत्रे तिष्ठति दक्षिणे" ( २।९० ) इति ।

अग्न्याधाननिमित्तं वृद्धिश्राद्धमपराह्णे कुर्यादित्यर्थः। पुत्रजन्मादौ निमित्तान्तरमेव तत्कार्यम्। प्रातः शब्देन सार्द्धप्रहरात्मके काले कालवचनं तदाह गार्ग्यः—

"ललाटसम्मिते भानौ प्रथमः प्रहरः स्मृतः॥
स एव (१)सार्द्धसंयुक्तः प्रातरित्यभिधीयते"

निर्णयामृते—

"वैवाहिकं तु पूर्वाह्णेऽपराह्णे त्वाग्निकं स्मृतम्" इति।

यदि तु सुलग्नेऽग्निस्थापनं पूर्वाह्णे पराह्णे तदा तु पूर्वदिन एव त्वपरं विधाय मातृपूजनश्राद्धादिविधाय व्रतं कुर्यात्। श्वः स्नात्वा शुभकालेऽग्निं मन्थयेत्। यदि चेच्चतुर्थे यामे सायं वाऽधानकालस्तर्हि गृह्यकारमतमवलम्बनीयम्। सायमग्न्याधानस्य प्राधान्यात्। यद्येवमुच्यते नापराह्णेग्न्याधानस्य प्राधान्यात् यद्येवमुच्यते नापराह्णेऽग्न्याधेयं (धानं) विधेयम्, तदसत्, लग्नानुसन्धानात् श्राद्धनिर्णयाच्च, तस्मिन्नेवाहनि तदेवाग्निमुपसमाधायेति वचनात्, "वैवाहकोऽग्निर्गृह्योग्निरि"ति वचनात्, अर्द्धरात्रौ प्राप्तायां श्वो विदध्यादिति साङ्खायनानुयायिसम्मतात्।

अथेदानीं प्रयोग उच्यते—

पूर्वोक्तपर्वाधाने वा नक्षत्राधानदिवसे वा पूर्वाह्णे माध्याह्निकं कर्म देवतार्चनान्तं कृत्वा तद्दिने श्राद्धात् पूर्वं वैश्वदेवं कृत्वा एवमुक्तम्। न तु श्राद्धोत्तरं पाकेनैव वैश्वदेवः कर्तव्यः, किन्तु

(१) 'स एवाऽध्यर्धसंयुक्त' इति रुद्रकल्पद्रुमपाठः।

वैश्वदेवार्थं पाकं कृत्वा श्राद्धं कर्तव्यम् ।

ततः शुचिः सभार्यः प्राङ्मुख उपविश्याचम्य प्राणाना-यम्य देशकालौ सङ्कीर्त्य पित्राद्यैरस्खलिताधिकारानुसन्धानार्थमेकां गामहं सम्प्रदास्ये, वा तन्मूल्यन्दद्यात् ।

ततः देशकालौ स्मृत्वा, आधानाकरणजनितदोषपरिहारार्थ-मतीतवर्षसङ्ख्याकान् यथाशक्तिद्रव्यप्रत्याम्नायद्वारा कृच्छ्रानहमाचरिष्ये । पुनर्देशकालौ स्मृत्वा तत्सत् परमेश्वरप्रीत्यर्थं आवसथ्याधानमग्निका-वधानवैश्वदेवसायं प्रातर्होमान्तानि कर्माणि कर्तुं गणपतिपूजनपूर्वकं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्धारापूर्वकनान्दीश्राद्धं करिष्ये ।। श्राद्धं समाप्य पश्चाद्धोमद्रव्यदानम् । एवं यस्य द्रव्य-दाने शक्तिस्तेन तद्गणनया होमद्रव्यदर्शपूर्णमासस्थालीपाकद्रव्यं वै-श्वदेवद्रव्यं यथासम्भवमाज्यं चाग्निविच्छेददिनगणनया ब्राह्मणाय दद्यात् । ततो देशकालौ स्मृत्वा अधिकारे सत्यकृतसायंप्रातर्होमपक्षा-दिकर्मपिण्डपितृयज्ञपञ्चमहायज्ञाद्यनुसन्धानार्थं होमद्रव्यदानमहं करिष्ये ।

ततो ब्राह्मणहस्ते ताम्रपात्रे वा शिवा आपः सन्तु, सौमनस्य-मस्तु, अक्षतं चारिष्टं चास्तु, ततोऽक्षतपुष्पसहितमुदकं गृहीत्वा हिरण्यगर्भेति मन्त्रं पठित्वा अथाऽग्नित्यागदिनादारभ्यैतावन्तं का-लमग्निविच्छेदेन लुप्तानां सायं प्रातर्होमानां दर्शपू(पौ)र्णमासस्थाली-पाकानां च पिण्डपितृयज्ञानां च पञ्चमहायज्ञानां च सम्पत्तिप-र्याप्तं व्रीह्याज्यादिरूपं द्रव्यं तन्निष्क्रयं वाऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

इति होमद्रव्यदानम् ।

ततः शालाप्रवेशः—

तदुपयोगी कुण्डकारिका—

"स्मार्त्ते सार्द्धत्रिभू १३ । ४ मितैः परिमितं व्यासा-
र्द्धसूत्रैः लिखेत्

कुर्यात्तद्वलयं त्रिमेखलमिति रामाङ्गुलैर्विस्तृतम् ।
उच्चं द्वादशसङ्ख्यकं ऋतुमितं द्विर्मेखलं स्यात्तथा
यद्वाऽधो नवसङ्ख्यकं करमितं कुण्डं तु वेदाङ्गुलैः" ॥

अन्यच्च—

"पादोनयूकात्रयसार्द्धयुक्तं (१३।४।२।६)
विश्वाङ्गुलव्यासदलेन वृत्तम् ।
नर्यस्य तन्मध्यगचिह्नकं स्यात्
स्मार्तस्य सभ्यस्य तथैव वृत्ते" ॥
"अर्काङ्गुलोन्नतयुगाङ्गुलविस्तृताद्या
नन्दाङ्गुलोन्नतभुजाङ्गुलविस्तृतान्या ॥
सन्मेखलाद्वयमिदं त्वथवादिमैका
कुण्डाकृतिर्निगदिता खलु खातवर्जम्" ॥

अथाङ्गुलप्रमाणम् । कात्यायनश्रौतसूत्रे—

"दानवाचनान्वारम्भणवरवरणव्रतप्रमाणेषु यजमानं प्रतीया"
(१।१०।१२ ) दिति परिभाषितत्वाद्यजमानाङ्गुलादि ग्राह्यम् ।

"अङ्गुष्ठाङ्गुलिमानं तु यत्र यत्रोपदिश्यते ।
तत्र तत्र बृहत्पर्व ग्रन्थिभिर्मिनुयात्सदे"ति—

छन्दोगपरिशिष्टम् । बृहत्पर्वणि=मध्यमपर्वणि, तन्मूलग्र-

न्थयो यत्राङ्गुष्ठनोदना तत्राङ्गुष्ठस्य, अङ्गुलिनोदनायामङ्गुलीनाम् । छन्दोगानां परिशिष्टोक्तत्वादङ्गुष्ठेनारत्निमानम् । वाजसनेयिनां तु—यज्ञपार्श्वादङ्गुलैरिति । सूत्रोक्तपक्षस्तु—"यजमानेनोदूर्ध्ववाहुप्रपदोच्छ्रितेन समस्थितेन वे ( का० श्रौ० १६।७।३२ ) ( श० ब्रा० १०।२।२।६ ) ति, पञ्चारत्निर्दशवितस्तिर्विंशतिशताङ्गुलः पुरुष" इति सूत्रात्तु ( शुल्वसू० ५।६। ) पुरुषस्य पञ्चमोंऽशोऽरत्निः तच्चतुर्विंशोङ्गुलमिति रामवाजपेयिभिराधानप्रकरणे उक्तम् ।

ततः सुस्नातया पत्न्या सह सालङ्कारया सुस्नातो द्विजेन्द्रो ( जितेन्द्रियो ) ऽनेन मन्त्रेण शालां प्रविशेत् ।

"ॐ देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे । यस्माहमस्मि न तमन्तर्यामि स्वम्म इष्टᳬं स्वᳬं श्रान्त स्वᳬं सुहुतमस्तु" ( का० श्रौ० ४।७।१७ ) इति जपित्वा शालां प्रविशेत् । इत्यनेन ( श० ब्रा० श्रुत्या० २।२।३।२ ) देवान् पितॄंश्चोपाह्वयतीत्यर्थः । प्रविश्य भूमिशोधनं विधाय "रक्षोहणं वलगहन" ( शु० सं० ५।२३ ) मित्यादिना सर्षपान्विकीर्यासनमास्तीर्याचम्य प्राणानायम्य ब्राह्मणैः स्वस्ति वाचयित्वा ग्रन्थिम्बध्वा मङ्गलतिलकं विधाय पूर्वाभिमुखः सन् कुशयवादिगृहीत्वा देशकालौ स्मृत्वाद्यामुकवेदस्यामुकशाखाध्यायी अमुकशर्माऽहं अग्न्याधानकृतश्रुतिस्मृतिपुराणोक्तजन्यपुण्यफलप्राप्तये आवसथ्याधानं करिष्ये । तदङ्गब्रह्मवरणं करिष्ये ।

ब्रह्मवरणं कृत्वा तं मधुपर्कादिभिः पूजयेत् । हरिहरमते

ब्रह्मवरमरणिप्रदानं च, प्रदानाभावेपि धारणं भवत्येवेति गदाधरः। ततः अहतवस्त्रपरिधाने पत्नी च गन्धमाल्यमाशीश्च दद्यात्। ततो यजमानः वैकल्पिकं स्मरेत्। तत्र मथिताग्नेः स्थापनम्, पूर्वेण ब्रह्मणो गमनम्, उत्तरेण पात्रासादनम्, द्वे पवित्रे ताम्रमयी आज्यस्थाली ताम्रमयी चरुस्थाली पालाश्यः समिधः प्राञ्चावाघारौ, समिद्धतमे आज्यभागौ, पूर्णपात्रं दक्षिणा, एतान् वैकल्पिकपदार्थानहं करिष्ये।

ततोऽरणिमानम्। कुशास्तृतायां भूमौ पत्नीयजमानयोः पुरस्तात्प्रागग्रे संस्थाप्य अहतवस्त्रद्वयेन परितो वेष्ट्य ततो दक्षिणसव्यहस्ताङ्गुष्ठेन अग्रादिमूलपर्यन्तं प्रथमादिचतुर्विंशतिपर्यन्तं दैर्घ्यमानम्, प्रथमादिषष्ठपर्यन्तं विस्तारमानम्, प्रथमादिचतुर्थपर्यन्तमुच्छ्रायमानम्,

ततोऽधरारण्या मूलाद्यग्रपर्यन्तं विस्तारमानम्। अवयवकल्पनं दक्षिणसव्यहस्ताङ्गुष्ठेन ततोऽङ्गुष्ठमेकं पादौ ततोऽङ्गुष्ठत्रयं जङ्घे, ततोऽङ्गुलचतुष्टयमूरू, ततोऽङ्गुलद्वयं देवयोनिः, ततोऽङ्गुलद्वयं वस्तिः, ततोऽङ्गुलमेकं कटिः, ततोऽङ्गुलत्रयमुदरम्, ततोऽङ्गुलमेकं हृदयम् ततोऽङ्गुलद्वयं वक्षः, ततोऽङ्गुलमेकं ग्रीवा, ततोऽङ्गुलमेकं मुखं, ततोऽङ्गुलमेकं कर्णौ, ततोऽङ्गुलमेकं नेत्रे, ततोऽङ्गुलमेकं शिरः, एवं सावयवमरणीद्वयं विचिन्त्य निर्दिशेत्। स्मार्तकर्मसाधनभूतस्याग्नेर्योनिभूते इमे अरणी तत्रेयमधरेयमुत्तरा इत्युच्चार्य हस्तेनारणीद्वयं स्पृशेत्। ततो गन्धादिभिः सम्पूज्य देशकालौ सङ्कीर्त्य ममामुकवेदस्यामुकशाखाध्यायिनोऽमुकशर्मणोऽग्न्याधानीयफलप्राप्तये अरण्योः पूजनमहं करिष्ये। अग्न्येर्योनिरूपाभ्यामरणीभ्यां नमः। पाद्यमर्घ्यमाचमनं मधुपर्कं पुन-

राचमनीयं स्नानीयमाचमनीयं समर्प्य वस्त्रादिना समर्चयेत् ।

ततः कुसुमाक्षतैः सम्पूज्य पुष्पादि ताम्बूलादि निवेद्य नमस्कारः।

ततो ब्रह्मा अरणिद्वयं हस्ते धृत्वा स्मार्तकर्मसाधनभूतस्याग्नेर्यो-निरूपे इमे अरणी तत्रेयमधरेयमुत्तरा प्रतिगृह्यतामिति तद्धस्ते प्रय-च्छेत् , इमानि च यज्ञपात्राणि गृह्यन्ताम्, परिगृह्यन्ते पत्नी तद्धस्ता-दधरारणिं गृहीत्वाऽङ्के निदधाति यजमानोऽप्यङ्के निधाय पुनः कुङ्कुमपुष्पैः सम्पूजयेत् ।

ततो यजमानाभ्यां गन्धादिर्माङ्गल्यं विधाय आशीर्दद्यात् । ततो मन्थनम्, भूमौ दर्भास्तृतायामधरारणिमुत्तरां च निधायोत्तरा-रणोरीशानदिक्स्थमष्टाङ्गुलप्रमन्थं छित्वा पात्रे बुध्नगर्तमध्ये प्रवपति ।

ततो देवयोनिस्थाने मन्थनं कृत्वा प्राच्यामग्निनिस्सारणाय वाहिनीं कृत्वा ततो यजमानः प्राङ्मुख ओविलीं धारयति प्रत्यङ्मुखी पत्नी मन्थनं करोति पत्न्या मन्थनाशक्तौ ब्राह्मणेन केनचिन्मन्थनं कार्यम् । प्रथममन्थने योनिनियमः द्वितीये तु न नियमः अग्नौ जाते वरदानं, यज्ञियकाष्ठैः प्रज्वालनम् , ततः खरे पञ्च भूसंस्कारान् कृत्वा, अत्र गोमये विशेषः, रेणुकारिकायाम्—

"अमेध्यसेवनी–वन्ध्या–प्रसूताभ्यो न गोमयम् ।
जीर्णायाश्चैव लेपार्थमाहरेन्न तु माहिषम्" ॥

शुभे मुहूर्ते सुनवांशे सकलग्रहानुकूले कालेऽग्निमुपसमादधाति । भो द्विजनामाग्ने ! अत्रागच्छागच्छ तिष्ठ तिष्ठेति यजमानः सपत्नीको वदेत् । आहरणपक्षश्चेत्तदा यजमानः सपत्नीकः ब्राह्मणैः सह मृत्स्थालीमादाय वेदघोषमङ्गलगीतवाद्यादिभिर्जनितोत्साहो वैश्यस्य

बहुपशोर्गृहात् सूत्रान्तरमतेनाम्बरीषाद् बहुयाजिनो ब्राह्मणस्य गृहाद्वा बह्वन्नपाकाद् ब्राह्मणमहानसाद्वा स्थाल्यामग्निं गृहीत्वा तथैव गृहमागत्य पञ्च भूसंस्कारान् कृत्वा कुण्डे प्राङ्मुखे निदध्यात् इत्याहरणापन्नः ॥

ऋष्यादिस्मरणमत्रेति रेणुकारिकागङ्गाधरहरिहराः । तच्च विचारणीयम् । कर्मकाले प्रतिमन्त्रस्मरणमुत ? पूर्वमेव स्मरणं कृत्वा कर्मारम्भः । ततः सर्वानुक्रमसूत्रे—

"ऋषिदैवतछन्दांऽस्यनुक्रमिष्याम" इति प्रकृत्याह "एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजति याजयते तस्य ब्रह्म निर्वीर्यं यातयामं भवत्यथान्तरा श्वगर्तं वाऽऽपद्यते स्थाणुं वर्छति प्र मीयते वा पापीयान् भवति । अथ विज्ञायैतानि योऽधीते तस्य वीर्य( वत् । अथ योऽर्थवित्तस्य वीर्य )वत्तरं भवति जपित्वा हुत्वेष्ट्वा तत्फलेन युज्यत" ( पत्र १८—१२) इति ।

मदनरत्ने कात्यायनः—

"आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः" ॥

गङ्गाधरस्तु—

"ऋषिमादौ प्रयुञ्जीत छन्दो मध्ये नियोजयेत् ।
देवतामवसाने च मन्त्रज्ञो मन्त्रसिद्धये" ॥

सर्वानुक्रमण्यामुक्तत्वात्तत्तत्पदार्थज्ञानमात्रमपेक्षितं न तु कर्मकाले उच्चारणम् , यथार्थज्ञानं वैकल्पिकं, अथवा ज्ञात्वोपयजेदिति प्रत्येकमभिसम्बध्यते । तेन तत्तन्मन्त्रस्य ऋष्यादिकं तत्तन्मन्त्रप्रयोगात् प्राक् ज्ञातव्यमित्यर्थः। एतच्च ऋष्यादिज्ञानं वैकल्पिकं दर्शपौ-

र्णमासपद्धतौ तदीयायां च दीपिकायां वैद्यनाथमिश्राः । प्राच्यग्रन्थेषु अध्ययनाध्यापनान्तर्जलजपेषु नियमोऽन्यत्र पुरुषार्थता न कर्मवैगुण्यमिति । क्वचिदस्यापवादः कृष्णंभट्टीये—

"न च स्मरेदृषिं छन्दः श्राद्धे वैतानिके मखे" इति ।

अन्यत्र—

"अग्निहोत्रे वैश्वदेवे विवाहादिविधौ तथा ।
होमकाले न दृश्यन्ते प्रायश्छन्दर्षिदेवताः ॥
शान्तिकादिषु कार्येषु मन्त्रपाठक्रियादिषु ।
होमे नैव प्रकर्तव्याः कदाचिदृषिदेवताः" ॥

ततो देवताभिध्यानं रेणुः—

"देवतानामभिध्यानं न करोति विमूढधीः ।
वृथा तस्य भवेत् कर्म पूर्वाचार्या वदन्ति हि" ॥

अथ ऋष्यादिस्मरणम् । 'त्वन्नः' 'सत्वन्न' इति द्वयोर्वामदेवस्त्रिष्टुप् अग्नीवरुणौ, 'इमम्मे' 'तत्वा यामी'ति द्वयोः शुनश्शेपगायत्री त्रिष्टुभौ वरुणौ, 'ये ते शतमयाश्चाग्ने'द्वयोः वामदेवस्त्रिष्टुप् वरुणो, 'उदुत्तममि'ति शुनश्शेपस्त्रिष्टुप् वरुणो 'भवतन्न' इति प्रजापतिः पङ्क्तिर्जातवेदसौ, 'अयास्यग्न' इति गौतमो गायत्री देवागातुविदा देवता सर्वेषामाज्यहोमे विनियोगः। 'भूर्भुवः स्वरि'ति महाव्याहृतीनां प्रजापतिर्ऋषिः क्रमेण गायत्र्युष्णिगनुष्टुप्छन्दांस्यग्निर्वायुः सूर्यो देवता 'त्वन्न' 'सत्वन्न' 'अयाश्चाग्ने'ये ते शतमि'ति मन्त्राणां वामदेवस्त्रिष्टुवग्नीवरुणौ दैवते द्वयोस्तृतीयस्याग्निश्चतुर्थस्य वरुणः

सविता विष्णुर्विश्वेदेवामरुतः स्वर्का 'उदुत्तममि'ति शुनः शेपस्त्रिष्टुप् वरुणो देवता सर्वेषामाज्यहोमे विनियोगः ॥

अथ देवताभिध्यानम् । तत्र प्रजापतिं, इन्द्रं अग्निं, सोमं, अग्नीवरुणौ, अग्नीवरुणौ, वरुणं, वरुणं, वरुणं सवितारं विष्णुं विश्वान्देवान्मरुतः स्वर्कान्, अग्निं वरुणं आदित्यं अदितिं, जातवेदसौ' एता देवता आज्येन, अग्निं पवमानं, अग्निं पावकं, अग्निं शुचिं, अदितिं, एता प्रधानदेवताश्चरुणा, अग्नीवरुणौ वरुणं वरुणं वरुणं, सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान् अग्निं वरुणं जातवेदसौ एता देवताः पुनराज्येन अग्निं स्विष्टकृतं चरुशेषेण देवागातुविदं, अग्निं, वायुं, सूर्यं, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान्, वरुणं, प्रजापतिं, एता देवता आज्येन एता अङ्गप्रधानार्था देवता अस्मिन् स्मार्ताधानाख्ये कर्मण्यहं यक्ष्ये ।

ततो दक्षिणतो ब्रह्मासनम्, उत्तरे ब्रह्माणं वृत्वा प्रादक्षिण्येनोप(वेशनम्,)विशेत्, उत्तरतः प्रणीताप्रणयनम्, अन्तरिक्षे पूरणम्, आत्माभिमुखं पूरयेत्, तत्रैव स्थापनम्, आलम्भनम्, अग्नेरुत्तरतो निधानम्, तृणैरग्नीन् परिस्तीर्य पुरस्तात्प्रथमन्दक्षिणतः, पश्चादुत्तरतः, अग्नेरुत्तरतः पात्रासादनम्, तदुक्तम्—

प्रागग्रोदग्बिलं तस्य उत्तरासादनेऽग्नितः ।

पात्रजातं प्राग्बिलं तदुदगग्रं तु पश्चिमे ।

पवित्रच्छेदनादर्भास्त्रयः, पवित्रे द्वे, प्रोक्षणीपात्रं, आज्यस्थाली, चरुस्थाली, सम्मार्गकुशाः पञ्च, उपयमनकुशाः सप्त, समिध-

स्तिस्रः, स्रुवः, आज्यं, तण्डुलाः, दक्षिणा, पूर्णपात्रं, पवित्रच्छेदनैः पवित्रकरणम्, द्वयोरुपरि त्रीणि निधाय द्विमूलेन द्विकुशौ प्रदक्षिणीकृत्य सर्वान् युगपद्धस्ताभ्यामनामिकाङ्गुष्ठाभ्यां धृत्वा मध्यमपर्वभ्यां छित्वा तानुत्तरतः क्षिपेत्। प्रोक्षण्यामपः कृत्वा उत्पवनं, ताः स्थाने तयोः सव्यहस्तकरणं, दक्षिणेनोदिङ्गनम्, ताभिस्तासामेव प्रोक्षणम्, आज्यस्थाल्याः प्रोक्षणम्, चरुस्थाल्याः प्रोक्षणम्, सम्मार्गकुशानां प्रोक्षणम्, उपयमनकुशानां प्रोक्षणम्, समिधां प्रोक्षणम्, स्रुवस्य प्रोक्षणम्, आज्यस्य प्रोक्षणम्, तण्डुलानां प्रोक्षणम्, पूर्णपात्रस्य प्रोक्षणम्, असञ्चरे प्रोक्षणीनिधानम्।

प्रोक्षणमुक्तं परिशिष्टे—

"उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम्।
तिरश्चावोक्षणं प्रोक्तं नीचेनाभ्युक्षणं स्मृतम्" ॥

आज्यस्थाल्यामाज्यनिर्वापः, चरुस्थाल्यां तण्डुलानोप्य त्रिःप्रक्षालनम्, दक्षिणात आज्याधिश्रयणम्, उत्तरतश्चरोरधिश्रयणम्, ईशानाद्युल्मुकेन उभयोः पर्यग्निकरणम्, श्रपणम्, अर्द्धशृते स्रुवस्य प्रतपनं न्युब्जपुष्करेण, तदुक्तं लघुविष्णुना—

"चरुपाकं ततः कार्यमाचार्येण यथाविधि।
अर्द्धश्रृतं चरुं ज्ञात्वा स्रुवञ्चोपप्रतापयेत्" ॥

सम्मार्गकुशैः सम्मार्जनम्, प्रणीतोदकेनाभ्युक्षणम्, सम्मार्गकुशानां प्रक्षेपः। तदुक्तं परिशिष्टे—

"तान् कुशान्कृतसम्मार्गान्प्रोक्ष्याग्नौ प्रहरेदथ।
पुनः प्रतपनं मन्त्रदर्भानग्नौ(प्रतप्यते)विनिक्षिपेत्" ॥

पुनः प्रतपनम्, जघनदेशे निधानम्, आज्योद्वासनम्, चरु-पूर्वेण चरोरुद्वासनम्, पृष्ठतः पवित्रेणाज्योत्पवनम्, अवेक्षणम्, अ-पद्रव्यनिरसनम्, प्रोक्षण्याः प्रत्युत्पवनम्, उपयमनकुशादानम्, समिधादानम्, तिष्ठन्त्समिधः प्रक्षेपः, समिधोऽभ्याधाय 'स्वाहा' सप-वित्राम्बुहस्तेन प्रोक्षण्युदकशेषेणाग्नेः पर्युक्षणं, पवित्रयोः प्रणीतासु निधानम्, एष एव विधिर्यत्र क्वचिद्धोमः। दक्षिणं जान्वाच्य ब्रह्म-णान्वारब्धः स्रुवेण होमः। गृह्यकारिकायाम्—

"प्रणीतासु पवित्रे ते कृत्वा जान्वाच्य दक्षिणम्।
अन्वारब्धकृते होमे ब्रह्मणा दक्षिणे करे" ॥

(१)स्रुवधारणं कारिकायाम्—

"अग्रे धृत्वाऽर्थनाशाय मध्ये चैव मृतप्रजाः।
मूले च म्रियते होता स्रुवस्थानं कथं भवेत् ॥

---

(१) स्रुवश्च चतुरङ्गुलं त्यक्त्वा शङ्खमुद्रया धार्यः। तथा च-मत्स्यपुराणे—

"मूले हानिकरं प्रोक्तं मध्ये शोककरं तथा।
अग्रे व्याधिकरं प्रोक्तं स्रुवं धारयते कथम् ॥
कनिष्ठाङ्गुलिमानेन चतुर्विंशतिकाङ्गुलम्।
चतुरङ्गुलं परित्यज्य अग्र चैव द्विरष्टकम् ॥
चतुरङ्गुलं च तन्मध्ये धारयेच्छङ्खमुद्रया।
हीयते यजमानो वै स्रुवमूलस्य दर्शनात् ॥
तस्मात्सङ्गोपयेन्मूलं होमस्थले स्रुवस्य तु" ॥ इति।

शङ्खमुद्रालक्षणम्—

"वामाङ्गुष्ठं तु सङ्गृह्य दक्षिणेन तु मुष्टिना।
कृत्वोत्तानं तथा मुष्टिमङ्गुष्ठं तु प्रसारयेत् ॥

अग्रम(ध्यं)ध्याच्च यन्मध्यं मूलम(ध्ये च)ध्याच्च मध्यतः ।
स्रुवं च धारयेद्विद्वान् ज्ञातव्यं च सदा बुधैः ॥
तर्जनीं च बहिः कृत्वा कनिष्ठां च बहिस्तथा ।
मध्यमानामिकाङ्गुष्ठैः स्रुवं च धारयेद् द्विजः ॥
स्रुवहोमे सदा त्यागः प्रोक्षणीपात्रमध्यतः ।
पाणिहोमे न दातव्यो विना प्रोक्षणिकां तथा ।
सपवित्राम्बुहस्तेन वह्निं कुर्यात्प्रदक्षिणम् ।
हव्यवाट् सलिलं दृष्ट्वा विभीतः संमुखो भवेत् ॥
आघारौ नासिके ज्ञेयौ आज्यभागौ च चक्षुषी ।
वक्त्रं चोदरकुक्षौ च व्याहृतिस्तदनन्तरम् ॥

---

वामाङ्गुल्यस्तथा श्लिष्टाः संयुक्ताः सुप्रसारिताः ।
दक्षिणाङ्गुष्ठसंस्पृष्टा मुद्रा शङ्खस्य चोदिता" ॥
(वीरमित्रोदये पूजाप्रकाशे १२४ पत्रे) इति ।
"अग्रे धृत्वा तु विफलं मध्ये धृत्वा प्रजाक्षयः ॥
मूलेन म्रियते होता स्रु(क् )वस्थानं (च) कथं भवेत् ।
अग्रान्मध्याच्च मध्ये तु मूलान्मध्याच्च मध्यतः ॥
स्रुवस्तु धार्यो विद्वद्भिर्निर्वाहः कर्मसिद्धये ।
अग्निः सोमश्चसूर्यश्च रुद्रश्चैव प्रजापतिः ॥
षष्ठन्तु यमदैवत्यं देवतास्तु स्रुवे सदा ।
अग्निभागेऽग्निसन्तापश्चान्द्रे संक्लेश एव च ॥
सूर्ये तु धननाशः स्याद्रुद्रे रौद्रभयं भवेत् ।
प्रजापतिविभागेन प्रजावृद्धिर्भविष्यति ।
यमभागे तथा मृत्युर्देवताफलमीदृशमि"
ति रत्नावल्यां विशेषः ।

हस्तौ पादौ तथा कुत्ती पश्चवारुणाकेन तु ।
हुताशनशरीरन्तु ज्ञातव्यं सर्वदा बुधैः ॥
अप्रदीप्ते सधूमे च हूयते चेद्धुताशने ।
यजमानो भवेदन्धो ब्राह्मणश्च विशेषतः ॥
पयश्चापोघृतं चैव स्नेहपक्वं तथैव च ।
हस्तेन जुहुयाद्विप्रः स विप्रो ब्रह्महा भवेत् ॥
न शूर्पेण धमेदग्निं वस्त्रेणैव च पाणिना ।
मुखेन धमयेदग्निं मुखादग्निरजायत ॥
वस्त्रेण च भवेद्व्याधिः सूर्पेण धननाशनम् ।
हस्तेन च भवेन्मृत्युः कर्मसिद्धिर्मुखेन च ॥
नाग्निं(ग्नौ) मुखं विनो होमो लौकिकः श्रुतिसम्भवः ।
वेणोरग्निः (ग्नेः)प्रसूतत्वाद्वेणुरग्नेश्च पावनः ॥
तस्माद् वेणुधमन्यैव धमेदग्निं विचक्षणः इति ।
'सधूमः कर्णमित्याहुः सकृज्ज्वाला तु नासिके ॥
सधूमाग्निस्तु नेत्राणि प्रज्वाल्यन्तु मुखं स्मृतम् ।
कर्णाहुते तु दारिद्र्यं सुहृद्दुखं तु नासिके ॥
नेत्रः स्थानानि नाशः स्याद्वक्त्रे वर्द्धयते प्रजाः ।
स्वर्णसिंदूरबालार्ककुङ्कुमक्षौद्रसन्निभः ॥
पावकस्य शुभ्रवर्णः शोभनः परिकीर्तितः ।
भेरीवाजीनहस्तीन्द्रध्वनिवक्त्रे शुभावहाः ॥
पद्मेन्दीवरकल्हारसर्पिगुग्गुलनाशने ।
खरस्वरसमो वह्नेर्ध्वनिः सर्वं विनाशयेत् ॥

शुष्कान्ने च भवेत् कुष्ठिः उष्णो व्याधिः प्रजायते ।
रूक्षे निर्धनतां याति द्वारं हुत्वा व्रजत्यधः ॥
यत्किञ्चिज्जुहुयादग्नौ तत्सर्वं त्यागपूर्वकम् ।
अन्यथा कुरुते यस्तु नरकं प्रतिपद्यते" ॥

इति स्रुवाग्निनिर्णयः ।

अथ होमनिर्णयः । तत (१)ईशान्ये मनसा(२) "ॐ प्रजा-

---

( १ ) प्रसारितसंहताङ्गुलिसव्यहस्तं सोपग्रहं हृदि निधाय दक्षिणहस्तेन जुहुयात् । अग्नेरुत्तरविभागे पूर्वाघारं प्राक्संस्थं ऋजुं सन्ततं दीर्घं दक्षिणविभागे उत्तराघारमीदृशमेवेति स्मार्तगङ्गाधरे ।

अत्र ऋजुत्वादीनां भिन्नोपकारकाणां गुणानां समुच्चयः कर्तव्यः न तु विकल्पः । तथा हि जैमिनिकात्यायनौ—"एककर्मणि शिष्टत्वाद् गुणानां सर्वकर्म स्यात्" ( जै० सू० १२।३।८ ) "धर्ममात्रेषु समुच्चयोऽविरोधे" ( का० १।७।८ )इति ।

"ऋजुत्वादय आघारे विकल्प्यन्ते न वाऽग्रिमः ।
एकार्थत्वाददृष्टार्थभेदात्सम्भवतोऽन्तिमः" ॥ इति ।
( जै० न्या० १२।३।३ )

पूर्वतन्त्रस्य द्वादशाध्याये तृतीयपादे—ऋजुमाघारयति, सन्ततमाघारयति, ऊर्ध्वमाघारयति, ( तै० सं० २।५।११ ) इति विषयवाक्यमादाय ऋजुत्वादीनामाघारोपकारद्वारा कार्यस्यैकत्वाद्विकल्प इति पूर्वपक्षयित्वा दृष्टद्वारभेदाभावेऽप्यदृष्टद्वारभेदात्सहानुष्ठानसम्भवाच्च विकल्पो न किन्तु समुच्चय एवेति सिद्धान्तितत्वात् ।

( २ ) "तस्माद्यत्किञ्चित्प्राजापत्यं यज्ञे क्रियतऽउपाꣳश्वेव तत् क्रियत" ( श० १।४।५।१२ ) इति वाक्यशेषादस्य प्रजापतिहोमस्योपांशुत्वम् ।

पतये स्वाहा। इदं प्रजापतये न मम। आग्नेये—ॐ इन्द्राय स्वाहा इदमिन्द्राय न मम। उत्तरपूर्वार्द्धे—ॐ अग्नये स्वाहा। इदमग्नये न मम। दक्षिणपूर्वार्द्धे—ॐ सोमाय स्वाहा। इदं सोमाय न मम। वैकल्पिके प्राश्वावाघारौ समिद्धतमे आज्यभागौ हुत्वा, अष्टर्चहोम नान्वारम्भः।

"ॐ (१)त्वन्नो अग्ने०। इदमग्नीवरुणाभ्यां न मम।
ॐ (२)सत्वन्नो अग्ने०। इदमग्नीवरुणाभ्यां न मम।
ॐ (३)इमम्मे० चके स्वाहा। इदं वरुणाय न मम।
ॐ त(४)त्वा यामि०मोषीः स्वाहा। इदं वरुणाय न मम।

---

आहुतेः पश्चात् सर्वत्र स्रुवसाध्ये होमे प्रत्याहुति प्रोक्षणीपात्रे संस्रवप्रक्षेपः।

(१) "ॐ त्वन्नोऽअग्ने व्वरुणस्य व्विद्वान्देवस्य हेडो अवया सिसीष्ठाः। यजिष्ठो व्वह्नितमः शोशुचानो विश्वाद्वेषाᳬसि प्र मुमुग्ध्यस्मत्स्वाहा। इति प्रथमा (सं० २१।३)।

(२) ॐ सत्वन्नोऽअग्ने वमोभवोतीनेदिष्ठोऽअस्या उषसो व्युष्टौ। अवयक्ष्व नो व्वरुणᳬ० रराणो व्वीहि मृडीकᳬ०सुहवो नऽएधि स्वाहा। (शु० य० सं० २१।४) इति द्वितीया।

(३) ॐ इमम्मे व्वरुण श्रुधीहवमद्या च मृडय। त्वामवस्युराचके (शु० य० सं० २१।१) इति तृतीया।

(४) ॐ तत्वा यामि व्ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो व्वरुणेह वोध्युरुशᳬ० समान ऽआयुः प्रमोषी (शु० य० सं० २१।२) इति चतुर्थी।

ॐ ये ते(१)शतं वरुण० स्वर्काः स्वाहा। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम।

"ॐ अया(२)श्चाग्ने०जꣳस्वाहा। इदमग्नये अयसे न मम।

"ॐ उदु(३)त्तमं०। इदं वरुणायादित्यायादितये न मम।

'ॐ (४)भवतन्नः० मद्य नः स्वाहा। इदं जातवेदोभ्यां न मम।

ततः स्थालीपाकमभिघार्य स्रुवेण होमः। ॐ अग्नये पव(५)मानाय स्वाहा। इदमग्नये पवमानाय न मम। ॐ अग्नये पावकाय स्वाहा। इदमग्नये पावकाय न मम। ॐ अग्नये शुचये स्वाहा। इदमग्नये शुचये। ॐ अदित्यै स्वाहा। इदमदित्यै न मम। 'त्वन्नः' 'सत्वन्नो अग्ने' इत्याद्यैः पूर्वोक्तैरष्टमिर्मन्त्रैः पुनरष्टाज्याहुतयः। ततो

---

(१) ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नोऽद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा (का०श्रौ०सू०अ० २५ कं० १ सू० ११) इति पञ्चमी।

(२) ॐ अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्वमयाऽअसि अया नो यज्ञं वहास्यया नो धेहि भेषजꣳस्वाहा (का० श्रौ०२५।१। २१) इति षष्ठी।

(३) ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमꣳश्रथाय। अथा वयमादित्यव्रते तवानागसो अदितये स्याम। (शु० य० सं० १२।१२) इति सप्तमी।

(४) ॐ भवतन्नः समनसौ सचेतसावरेपसौ। मा यज्ञꣳ० हिꣳ० सिष्टम्मा यज्ञपतिञ्जातवेदसौ शिवौ भवत मद्य नः। (शु० य० सं० ५।३) इत्यष्टमी।

(५) पवमानपावकशुच्याख्याग्निदेवतात्रयाख्यानं (श० ब्रा० कां० २ प्र० १ ब्रा० ५) स्पष्टम्।

ब्रह्मणान्वारब्धः उत्तरार्द्धात् स्रुवेण चरुमादायाग्नेरुत्तरार्द्धे—ॐअग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते न मम। ततो दशाज्या हुतयः अथानन्वारब्ध आज्येन ॐअयास्यग्नेर्वषट्कृतं यत्कर्मणात्यरीरिचं देवागातुविदः स्वाहा। इदं देवागातुविद्भ्यो न मम।

अथ ब्रह्मा( ह्मणा )न्वारब्धः, अन्वारम्भस्तु चतुर्दशाज्याहुतिषु भवति नान्यत्र। ॐ भूः स्वाहा इदमग्नये। ॐभुवः स्वाहा इदं वायवे। ॐ स्वः स्वाहा इदं सूर्याय। ॐ त्वन्नो अग्ने०। ॐ सत्वन्नो अग्ने०। ॐ अयाश्चाग्ने। ॐ ये ते शतं वरुण०। ॐ उदुत्तमं०। ॐ (१)प्रजापतये स्वाहा। ततो बर्हिर्होमः ॐ स्वाहेति। इदं प्रजापतये न मम। बर्हिर्होमे प्रजापतिर्देवता अनिरुक्तत्वात् "अनिरुक्तो वै प्रजापतिः"।

"मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थिति"

रिति कात्यायनोक्तेश्च। बर्हिर्होमश्चात्रैव नान्यत्र।

ततः सर्वहोमशेषाणां संस्रवप्राशनम्। पवित्राभ्यां मार्जनम्, पवित्रयोरग्नौ प्रक्षेपः, ब्रह्मणे दक्षिणादानम्, ब्रह्मन्! आवसथ्याधानकर्माङ्गतया विहितोऽयं वरः प्रतिगृह्यताम्। द्यौस्त्वा(२)ददात्विति प्रतिगृह्णाति। अत्र वरशब्देन त्रि(३)वर्षा गौर्वरः।

प्रणीताविमोकः, आपः शिवा इत्युदकवन्दनम्, एकं ब्राह्मणभोजनम्। वा स्मृत्युक्तं ब्राह्मणभोजनम्। आवसथ्याधानक-

---

(१) एवं स्मार्ताधाने पञ्चत्रिंशदाहुतयः।

(२) द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु।

(३) 'गौर्ब्राह्मणस्य वरः, ग्रामो राजन्यस्य अश्वो वैश्यस्येति (पा० [illegible] सू० १।८।१५-१७) सूत्रात्।

र्मणः साङ्गतासिध्यर्थं त्रयस्त्रिंशद्ब्राह्मणान् भोजयिष्ये। तेन श्री यज्ञपुरुषः प्रीयताम् ।

अत्र संस्रवप्राशने कृते पश्चाद्वैश्वदेवं कथं भवेदिति, ननु "अकृते वैश्वदेवे त्वि"त्यादिवचनाद्वैश्वदेवात् प्राक् स्थालीपाकानुष्ठानं प्राप्तम्, तत्र च संस्रवद्रव्यप्राशनं विहितं एतत् कृत्वा कथं माध्याह्निके वैश्वदेवादिकर्मण्यधिकार इति चेत् शेषप्राशनस्य कर्माङ्गत्वेन विधानात् अप्राशने कर्मवैगुण्यात्, नोत्तरकर्माधिकारनिवृत्तिः, बर्हिर्होमस्य विधानसामर्थ्यात् । तदुक्तं रेणुकारेण—

"मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।
यागत्यागेषु सर्वेषु नोच्छिष्टं मनुरब्रवीत्" ॥

ब्राह्मणभोजने(षु) तु यज्ञपार्श्वेनोक्तम्—

"गर्भाधानादिसंस्कारे ब्राह्मणान् भोजयेद्दश ।
शतं विवाहसंस्कारे पञ्चाशन् मेखलाविधौ ॥
आवसथ्ये त्रयस्त्रिंशच्छ्रौताधाने शतात्परम् ।
अष्टकं भोजयेद्भक्त्या तत्तत्संस्कारसिद्धये ॥
सहस्रं भोजयेत्सोमे ब्राह्मणानां शतं पशौ ।
चातुर्मास्ये च चत्वारि शतानि पञ्च सुराग्रहे ॥
अयुतं वाजपेये च ह्यश्वमेधे चतुर्गुणम् ।
आग्रयणे प्रायश्चित्ते ब्राह्मणान्दश पञ्च चे"ति ॥

( अथ मणिकावधानम् । )

अथ मणिकावधानम् । मणिकावधानपञ्चमहायज्ञसायम्प्रातर्होमनिमित्तं च श्राद्धचतुष्कं तद्दिन एव कृत्यमिति हरिहरः ।

याज्ञिकसम्प्रदायस्तु आवसथ्याधानतन्त्रेण सह कृत्वा न पृथक्करणम् ।

ततः शुचिः सभार्यः प्राङ्मुख उपविश्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य उदकसिद्ध्यर्थं मणिकावधानं करिष्ये। देवस्य त्वेति प्रजापतिर्गायत्री अभ्री देवताऽभ्यादाने विनियोगः । ॐ (१)देवस्य त्वा०भ्यामाददे नार्यसीति ( य० सं० ६।१ ) अभ्यादानम्। "ॐ इदमहर्ठ० रक्षसाङ्ग्रीवा अपि कृन्तामी" (य० सं० ६।१ )त्यनेन उत्तरपूर्वस्यां खननम् । प्राच्यां दिशि पांशूनामुद्वपनम् , अवटे कुशास्तरणम् , यवाक्षतारिष्टसर्षपदधिदूर्वाप्रक्षेपः हरिद्रादीनां च । ततो मणिकं गृहीत्वा 'समुद्रोऽसीति' साध्या वा यजुर्वायुः मणिकस्य स्थापने विनियोगः। ॐ 'समुद्रोऽसि नभस्वानार्द्रदानुः शम्भू'(य० सं० १८।४५ ) रित्यनेन अवटे माणिकनिधानम् , दृढीकरणम् , आपो

---

( १ ) अत्र पारस्करः—आवसथ्याधानं दारकाले । दायाद्यकाल एकेषाम् । वैश्यस्य बहुपशोर्गृहादग्निमाहृत्य । चातुष्प्राश्यपचनवत्सर्वम् । अरणिप्रदानमेके । पञ्च महायज्ञा इति श्रुतेः । अग्न्याधेयदेवताभ्यः स्थालीपाकं ॐ श्रपयित्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति । त्वन्नोऽअग्ने सत्वन्नो अग्न इमम्मे वरुण तत्वा यामि ये ते शतमयाश्चाग्न उदुत्तमं भवतन्न इत्यष्टौ पुरस्तात् । एवमुपरिष्टात्स्थालीपाकस्याग्न्याधेयदेवताभ्यो हुत्वा जुहोति । स्विष्टकृते च । अयास्यग्नेर्वषट्कृतं यत्कर्मणात्यरीरिचं देवागातुविद इति । बर्हिर्हुत्वा प्राश्नाति ततो ब्राह्मणभोजनम् । ( पा० गृ० १।२।१–१३ ) इति ।

( २ ) ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् । आददे नार्यसि ( य० सं० ६।१ ) ।

रेवतीति परमेष्ठीप्रजापतिस्त्रिष्टुप् आपो देवता उदकासेके विनियोगः । "ॐ(१)आपो रेवतीः०व्वयोधा" (पा० गृ० ३।५।३) दित्यनेन मणिके एकेन कलशेनोदकमासिञ्चेत्।आपो हि ष्ठे(य०सं० ३६।१४) ति तिसृणां सिन्धुद्वीप गायत्री आपो देवता उदकासेके विनियोगः(२) ॐ आपो हि ष्ठेति तिसृणां कलशोदकमासिञ्चेत्। अत ऊर्ध्वं श्रौतकर्मक्रियापाकश्च मणिकोदकेनैव कार्यः। असन्निधाने तु पुत्रः शिष्यो वा पत्नी वा उदकासेकं कुर्यात् । ततो ब्राह्मणभोजनम् । मणिकावधानसाङ्गतासिद्ध्यर्थं ब्राह्मणमेकं भोजयिष्ये(३) । अस्मिन् स्मार्ताधानाख्ये कर्मणि यत्कृतं तन्न्यूनातिरिक्तोऽयं भवतां ब्राह्मणानां वचनात् श्रीविष्णोः प्रसादात् सम्पूर्णोऽयं विधिर्भवतु। (४)यस्य स्मृत्येति

---

(१) ॐ आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं विभृथामृतं च । रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयोधात् ।

(२) आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन । महे रणाय चक्षसे । यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥ तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः ॥

(३) अत्र सूत्रम् । अथातो मणिकावधानम् । उत्तरपूर्वस्यां दिशि यूपवद्वटं खात्वा कुशानास्तीर्याक्षतानरिष्टकाꣳश्चान्यानि चाभि मङ्गलानि च तस्मिन् मिनोति मणिकꣳ० समुद्रोऽसीति । अप आसिञ्चति आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं विभृथामृतꣳ च रायश्च स्थ स्वपत्यस्य पत्नी सरस्वती तद्गृणते वयोधादिति। आपो हि ष्ठेति च तिसृभिः । ततो ब्राह्मणभोजनम् । (पा०गृ०३।५।१-५) इति ।

(४) "यस्य स्मृत्या" इति पूर्वं ( पत्र १३३ ) टिप्पण्यां द्रष्टव्यः ।

क्षमापनम्(१)।

क्षमस्वेति श्रुत्युक्तम्। ॐ घृताची स्थो धुर्य्यौ पातꣳ सुम्ने स्थः सुम्ने मा धत्तम्। यज्ञ नमश्च त उप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व ( य० सं० २।१९ )।

स यत्र शम्योराह तदभिमृशति यज्ञ नमश्च तऽउप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्वेति स यदतिरेचयति तन्नमस्कारेण शमयत्यथ यदूनं करोत्युप चेति तेन तदन्यूनं भवति यज्ञस्य शिवे सन्तिष्ठस्वेति यद्वै यज्ञस्यान्यूनातिरिक्तं तच्छिवं तेन तदुभयꣳ शमयति स्विष्टे मे सन्तिष्ठस्वेति यद्वै यज्ञस्यान्यूनातिरिक्तं तत् स्विष्टं तेनो तदुभयꣳ शमयत्येवमु हास्यैतेन यज्ञेनान्यूनातिरिक्तेनैवेष्टं भवति य एवं विद्वानेवमभिमृशति तस्मादेवमेवाभिमृशेत्तेह ते गन्धर्वा आसुः सूर्पं यवमान्कपिरुद्वालवान्धानान्तर्वान्" ( श० ब्रा० ११।२।३।९ ) इति। (२)चतुर्भिश्च० ।

---

( १ ) उद्धृत्याग्निं पचेदन्नं वारिणा शुचिना सुधीः।
मातृपूजा ततः श्राद्धं सङ्कल्प्य ऋषिदेवताः॥
स्मृत्वाऽभ्यादानमवटं परिले(लि)ख्य स्पृशेदपः।
खननोद्धपने चात्र कुशादीनां स्तृतिस्ततः॥
अवटे मणिकाधानमुदकासेचनं त्विह।
भोजनं ब्राह्मणे दद्यान्मातॄणां च विसर्जनम्॥

( २ ) चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां तस्मै यज्ञात्मने नमः॥

अस्यार्थः-ओ३श्रावयेति चतुरक्षरमस्तु श्रौ३षडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः एष सप्तदशा

(१)प्रमादात् कुर्वतां० । (२)कायेन वाचा० । श्रीविष्णवे नमः ।

इति एरण्डवल्लीपुरवासिशिवप्रसादकृते स्मार्तोल्लासे आवसथ्याधानप्रयोगः समाप्तः ।

# अथ पाकयज्ञनिर्णयः ।

अथ पाकयज्ञनिर्णय उच्यते ( अयं ) अन्वहं पाकस्तु गृह्याग्नौ कार्यः "चत्वारः पाकयज्ञा" इति सूत्रे(गृ० सू० १।४।१) पच्यतेऽन्वहमनेनेत्यस्मिन्निति वा, पाक इत्यन्वर्थसंज्ञया पाकस्य गृह्याग्नौ कर्तव्यताप्रतीतेः ।

"वैवाहिकेऽग्नौ कुर्वीत (गृह्यं)गार्ह्यं कर्म यथाविधि ।
पञ्चयज्ञविधानं च पक्तिं चान्वाहिकीं गृही"ति—

मनूक्तेश्च (३।६७) । गृह्यकारैरुक्तं कर्म (गृह्यं) गार्ह्यं विवाहोत्तरकालक्रियमाणत्वेन गृह्याग्नेर्विवाहसम्बन्धाद्वैवाहिकत्वं न पुनर्विवाहहोमाधिकरणत्वेन विवाहहोमस्य भार्यार्थसिद्ध्यर्थत्वेनाग्निसिद्ध्यर्थत्वाभावात् । अत एव भगवता पारस्कराचार्येण "वसथ्याधानं दारकाल" (१।२।१) इत्यादिनौपासनाग्निसिद्धये आवस-

---

क्षरात्मकः ( म०भा०६।३१ ) प्रजापतिः तस्मै यज्ञात्मने प्रजापतये नमः । इति ।

( १ ) प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥

( २ ) "कायेन वाचा" पूर्वं ( १३३ पत्रे ) टिप्पण्यां द्रष्टव्यः ।

ध्याधानं पृथक् समाम्नातम् । यद्यपि "पङ्क्तिं चान्वाहिकीं गृही"ति मनुना (३।६७) अन्वाहिक एव पाको गृह्याग्नावुक्तस्तथापि पाकत्वाविशेषात् श्राद्धस्य पाकयज्ञत्वाच्च श्राद्धार्थपाकोऽप्यत्रैव कार्यः। अतएव शावजननाशौचयोर्वैश्वदेवाभावेऽप्यत्रैवावश्यमहरहः पाकः कर्तव्यः ।

तदाह यज्ञपार्श्वे कात्यायनः—

"पचनाग्नौ पचेदन्नं सूतके मृतकेऽपि वा ।
अप(चेन्नै)चन्नेकरात्रेण पुनराधनमर्हति" ॥

पाकस्य गृह्याग्निसाध्यत्वात् गृह्याग्नेरेकदेशं महानसे कृत्वा पाकः कार्यः ।

तदुक्तं चतुर्विंशतिमते—

"प्रातर्होमं तु निर्वृत्य समुद्धृत्य हुताश(नम्)नात् ।
शेषं महानसे कृत्वा तत्र पाकं समाचरेत् ॥
तमग्निं पुनराहृत्य शालाग्नावेव निक्षिपेत् ।
ततोऽस्मिन् वैश्वदेवादिकर्म कुर्यादतन्द्रित" इति ।

शेषोऽग्नेरेकदेशः ।

शाङ्खायनकारिकायामपि—

"नित्यपाकस्य शालाग्नेरेकदेशस्य कार्यतः ।
पाकार्थमुल्मुकं हृत्वा तत्र पक्त्वा महानसे ॥
वैश्वदेवोऽन्यगारे स्यात्पाकार्थे(र्थः) सोऽप्यलौकिकः ।
भूरिपाको भवेद्यत्र श्राद्धादावुत्सवेषु च ॥
कृतेऽपि वैश्वदेवेऽपि(तु) लौकिको नैव कार्यतः ।

होमेनान्तरिते केचिदाहुः सर्वत्र लौकिकः ॥

न तत् समञ्जसं तेषामुपयद्धोम (का०श्रौ०६।७।८॥६।६।१०) दर्शनात् ।

समासं चोल्मुकस्याहुरग्न्यागारे महानसात् ॥

पाकान्ते वैश्वदेवात् प्राक् नैतदप्युपपद्यते ।

आहृतेऽप्युल्मुके पाकः शामित्रे दृश्यते पशौ ॥

वचनादाहृतिः सा तु लौकिकस्त्वपवर्गतः ।

धूपको दीपकश्चैव तापार्थो यश्च नीयते ॥

सर्वे ते लौकिका ज्ञेयास्तावन्मात्रापवर्गतः" ॥ इति ।

समासे कृते महानसेऽवशिष्टादग्नेर्धूपाद्यर्थं नीतानामग्नीनां लौकिकत्वमित्यर्थः । तस्य लौकिकस्यापि अन्यस्य दाने अन्यपाके शूद्रस्पर्शे महादोषः, यदा स्वगृहेष्वावसथ्याग्नौ पाककरणासम्भवो भवेत्तदा केशवस्वामिना अनुकल्प उक्तः ।

वैश्वदेवार्थे महानसा(द)ग्निमुद्धृत्य पाकानन्तरं संसर्गे कृते सति तच्छेषाग्निर्लौकिको भवेत् तल्लौकिकाग्निपाके न दोषः, तत्पचितान्नभोजने न दोषो न प्रायश्चित्तम् , किन्तु कृते वैश्वदेवे अन्नोपघाते सति पुनः पाकस्तुलौकिकाग्नावेव, न गृह्ये ।

तदाहापरार्के बौधायनः—

"अचोदितेन पाकेन कृतेनोद्धरणेन वा ।

लौकिकोऽग्निः स विज्ञेयः पुनराधानमर्हती"ति ॥

पुनर्भोजने वैश्वदेवो न कर्तव्यः । तदाह—

वैश्वदेवस्य निर्वृत्तेर्यदन्योऽतिथिराव्रजेत् ।

तस्मा अन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥

तदा पुनः पाकं कृत्वा तस्मै दद्यान्न बलिं हरेद्वैश्वदेवं न कुर्यादित्यर्थः । एवं रात्रावपि । तेन महायज्ञवैश्वदेवकर्मणोरेकत्वाद्वाजसनेयीनां वैश्वदेवाख्यं कर्म दिवैव भवति न रात्रौ ।

अत एवोक्तं यज्ञपार्श्वे कात्यायनेन—

"अग्निमा(न)नग्निमान् कुर्यादिमांस्तु प्रत्यहं सकृत् ।
अन्यथा प्रत्यवायी स्याद्रौरवं नरकं व्रजेदि"ति ॥

स्मृतिरत्नावल्यां हरिहरभाष्ये च वचनान्तरमुदाहृतम् ।

"न हन्ततिं न होमं च न स्वाध्यायं न तर्पणम् ।
नैकः श्राद्धद्वयं कुर्यात्समानेऽहनि कुत्रचित्" ॥

हन्ततिर्मनुष्ययज्ञः, होमो वैश्वदेवः, स्वाध्यायो ब्रह्मयज्ञः, तर्पणं पितृयज्ञः ।

यत्तु मदनपारिजाते—

"धर्मविन्नाचरेत्स्नानमाह्निकं तु पुनः पुनः ।
तर्पणं ब्रह्मयज्ञं च वैश्वदेवं च नाचरेत् ॥
सायम्प्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च ।
अनश्नताऽपि सततमन्यथा किल्बिषी भवेत्" ।

इत्युक्तं तच्छन्दोगविषयं न च वाजसनेयिविषयं, तस्माद्वाजसनेयिभिः प्रत्यहं सकृदेव पञ्चमहायज्ञाः कर्तव्या इति । यद्येवं तर्हि श्रुतिस्मृतिविहितं सायंकालीनं द्वितीयभोजनं कथं सिद्ध्येत् स्वात्मार्थे पाकनिषेधादिति चेदिति सत्यं ब्राह्मणादिभ्यो भिक्षादिदानार्थत्वेन

पाकस्य स्वात्मार्थत्वाभावान्निषेधाप्रवृत्तेः, पाकसंस्कारार्थम् । तदाह स्मृत्यन्तरे--

"वैश्वदेवा(संभवे)ऽभावे तु कुक्कुटाण्डप्रमाणकम् ।
अन्नमग्नौ सम्प्रहृत्य किल्बिषात्तु विमुच्यते" ॥

सायंकालीनपुनर्भोजनपाकस्तु लौकिकाग्नावेव न गृह्ये ।

"अचोदितेन पाकेन कृते(नो)चोद्धरणेन वा ।
लौकिकोऽग्निः स विज्ञेयः पुनराधानमर्हति" ॥

इति बौधायनवचनात् । यत्तु सायंप्रातर्वैश्वदेवः कर्तव्य इति बह्वृचविषयं, कातीयानां न सायमिति पुनः पाके सति ।

तथा च विष्णुपुराणे--

"पुनः पाकमुपादाय सायमप्यवनीपते ।
वैश्वदेवनिमित्तं तु पत्न्यमन्त्रं बलिं हरेत् ॥
तत्रापि श्वपचादिभ्यस्तथैवान्नापवर्जनम्" ॥

मनुरपि—

सायं त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् ॥

( ३।१२१ ) इति ।

तथोक्तं काशीखण्डे--

"माध्याह्निकं वैश्वदेवं गृहस्थः स्वयमाचरेत् ।
पत्नी सायं बलिं दद्यात् सिद्धान्नैर्मन्त्रवर्जितम् ॥
एतत्सायंतनं नाम वैश्वदेवं गृहाश्रमे ।
सायंप्रातर्भवेदेवं वैश्वदेवं प्रयत्नतः" ॥

तदाग्निमतोऽपि द्विर्भोजने न दोषः, किं तदपि श्रुत्या उक्तम् ।

"सायंप्रातर्वोऽशनमिति (श०ब्रा०२।४।२।३) श्रुतेः"।

तस्मादु सायंप्रातराश्येव स्यात्स यो हैवं विद्वान्त्सायंप्रातराशी भवति सर्वꣳ हैवायुरेति यदु ह किं च वाचा व्याहरति तदु हैव भवति ( श० ब्रा० २।४।२।३। ) इति श्रुतेः ।

स्मृतिश्च—

"आहिताग्निरनड्वांश्च यतिश्च ब्रह्मचारिणः ।
एतेषामश्नतां सिद्धिरिति वेदविदो विदुः" ॥

ततः प्रातःशब्दश्चाष्टधाविभक्तस्याह्नः पञ्चमभागपरः ।

तथा च दक्षः—

पञ्चमे तु तथा भागे संविभागो यथार्हतः ।
देवपितृमनुष्याणां कीटानां चोपजीविनाम् ॥
संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत्" ।
सायंशब्दश्च सार्द्धप्रहरतो रात्रेरर्वाक् द्रष्टव्यः ॥

परिशिष्टे कात्यायनः—

ऋषिभिर्द्विरसनमुक्तं विप्राणां मर्त्यवासिनां नित्यम् ।
अहनि च तथा तमस्विन्यां सार्द्धं प्रथमयामान्तः (१३।९) ॥

ततः पाकार्थमेकदेशं महानसे कृत्वा ततो गच्छेत् वा कुण्डस्थितो गच्छेत् ।

तदाह यज्ञपार्श्वे—

"आवसथ्यः खरस्थानात्पाकाद्यर्थाहृतोऽनलः ।
यदि खरस्थितो गच्छेत् वैश्वदेवः कथं भवेत् ॥
सर्वोद्धृत्य खरे कृत्वा आवसथ्यं विचक्षणः ।

पञ्चयज्ञक्रियां कुर्यात् सायंहोमोऽपि तत्र वै ॥

पश्चान्निर्मथ्य संस्थाप्य प्रातर्होमादिकाः क्रियाः" ॥ इति ।

यदा महानसाग्निं गच्छेत्तदा पुनरुद्धृत्य पाकं कृत्वा, ( कुर्यात् । ) विशेषस्तु ग्रन्थान्तरेऽवगन्तव्यः । अत्र विस्तरभयान्न लिख्यते । प्रवासनिर्णयस्त्वग्रे वक्ष्यामः ।

इति स्मार्तोल्लासे पाकनिर्णयः समाप्तः ॥

## अथ वैश्वदेवप्रयोगः ।

कारिकायाम्—

"अह्नोऽष्टधा विभक्तस्य चतुर्थे स्नानमाचरेत् ।
पञ्चमे पञ्च यज्ञा स्युर्भोजनं च तदुत्तरम् ॥
अह्नोऽष्टधाविभक्तस्य विभागः पञ्चमः स्मृतः ।
कुतश्चित्कारणान्मुख्यकालाभावे तदन्यथे"ति ॥

### अथ देवयज्ञः ।

महानसादग्निमुद्धृत्य कुण्डे निधाय ताम्रपात्रे वैश्वदेवादन्नादुद्धृत्य घृतेनाभिघार्य ।

तदुक्तं घृताभावे—

"घृतं वा यदि वा तैलं पयो वा यदि वा दधि ।
घृतस्थाने नियुक्तानां घृतशब्दो विधीयते" ॥

(१)"यद्देवा" ( शु० य० सं० २०।१४-१६ ) इति तिसृ
भिर्ऋग्भिर्मार्जनोदकेन क्षुद्रदृष्टिपातजनितदोषपरिहारार्थमुद्धृतान्न
प्रोक्षणम् । कृतकुशोपग्रहेण पवित्रपाणिनाऽऽचम्य प्राणानायम्य
देशकालौ सङ्कीर्त्य (२)पञ्चसूनाजनितैनोनिवर्हणापूर्वकनित्यकर्मानु
ष्ठानसिद्धिद्वारा परमेश्वरप्रीत्यर्थं वैश्वदेवाख्यं कर्म करिष्ये ।

ततोऽग्निपूजनम् । पावकनामाग्निं ध्यात्वा (३)'एषो ह देव
( शु० य० सं० ३२।४ ) इत्यासनम् । (४)'ॐस नः पिते'ति
( शु० य० सं० ३।२४ ) पञ्चोपचारैर्वह्निमग्निं सम्पूज्य—

"मुखं यः सर्वदेवानां हव्यभुक्कव्यभुक्तथा ।
पितॄणां च नमस्तस्मै विष्णवे पावकात्मने" ॥

इत्यग्निं प्रणमेत् ।

ततो देवताभिध्यानम् । तत्र ब्रह्माणं प्रजापतिं गृह्याः कश्यप

---

( १ ) ॐयद्देवा देवहेडनन्देवासश्चकृमा व्वयम् । अग्निर्म्मा त
स्मादेनसो व्विश्वान्मुञ्चत्वꣳ हसः ॥ यदि दिवा यदि नक्तमेनाꣳसि
चकृमा व्वयम् । व्वायुर्म्मा तस्मादेनसो व्विश्वान्मुञ्चत्वꣳ हसः ॥
यदि जाग्रद्यदि स्वप्नऽएनाꣳसि चकृमा व्वयम् । सूर्यो मा तस्मादेनसो
व्विश्वान्मुञ्चत्वꣳ हसः ।

( २ ) पञ्च सूना गृहस्थस्य वर्तन्तेऽहरहः सदा ।
कण्डनी पेषणी चुल्ली जलकुम्भी च मार्जनी"ति ।

( ३ ) ॐएषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ
गर्भेऽअन्तः । स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति स
र्वतोमुखः ॥

( ४ ) ॐस नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्व
स्तये ।

अनुमतिं पर्जन्यं अपः पृथिवीं धातारं विधातारं वायुं वायुं वायुं वायुं प्राचीं दक्षिणां प्रतीचीं उदीचीं ब्रह्माणं अन्तरिक्षं सूर्यं विश्वान् देवान् विश्वानि भूतानि उषसं भूतानां च पतिं पितॄन् यक्ष्मा गोत्रान् पितृपितामहप्रपितामहान् द्वितीयगोत्रान् मातामहप्रमातामह-वृद्धप्रमातामहान् मनुष्यान् गाः वैश्वदेवान्नपात्रनिर्णेजनस्वधाभिरहं य-क्ष्ये । मणिकोदकेनाग्नेः पर्युक्षणम् । (१)इतरथावृत्तिः । दक्षिण-जानुनिपातेन सव्यहस्तं सोपग्रहं निधाय दक्षिणेन जुहुयात् ।

ॐब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम । ॐप्रजापतये स्वाहा इदं प्रजापतये न मम । ॐगृह्याभ्यः स्वाहा । इदं गृह्याभ्यो न मम । ॐकश्यपाय स्वाहा । इदं कश्यपाय न मम ॐअनुमतये स्वाहा । इदमनुमतये न मम । इति देवयज्ञः । नात्र संस्रवः ।

( अथ भूतयज्ञः )

ततो मणिकसमीपे पश्चिमभागे प्राक्संस्थमुदक्संस्थं वा त्रीणि बलिहरणानि—ॐपर्जन्याय नमः। इदं पर्जन्याय न मम । ॐअद्भ्यो नमः । इदमद्भ्यो० । ॐपृथिव्यै नमः। इदं पृथिव्यै न मम। ततो द्वारदेशे । ॐधात्रे नमः । इदं धात्रे० । ॐविधात्रे नमः । इदं वि-धात्रे० । प्राच्यां दिशि वायवे नमः। इदं वायवे०। पुनः प्राच्यै दिशे नमः। इदं प्रा०। ॐदक्षिणायै दिशे नमः । इदं दक्षि० । ॐप्र-तीच्यै दिशे नमः इदं प्र० । ॐउदीच्यै दिशे० । इदमुदीच्यै न

---

( १ ) "विवृत्यावृत्य वेतरथावृत्ति ( का० श्रौ० १।८।२४ ) रिति सूत्रोक्तेः ॥

मम । मध्ये ॐब्रह्मणे नमः । इदं ब्रह्मणे० । ॐ अन्तरिक्षाय नमः इदमन्तरिक्षाय० । ॐसूर्याय नमः । इदं सूर्याय० । तदुत्तरत ॐ विश्वेभ्यो देवेभ्यो नमः । इदं विश्वेभ्यो देवेभ्यो न मम ॐ विश्वेभ्यो भूतेभ्यो नमः । इदं विश्वेभ्यो भूतेभ्यो न मम तदुत्तरतः—ॐउषसे नमः । इदमुषसे० । ॐ भूतानां च पतये नमः । इदं भूतानां च पतये न मम । इति भूतयज्ञः ।

( अथ पितृयज्ञः )

अथ पितृयज्ञः । शेषमन्नं पिण्डीकृत्य प्राचीनावीती दक्षिणामुखो भूत्वा सव्यं जान्वाच्य वलित्रयाद् दक्षिणतो दद्यात् । ॐ पितृभ्यः स्वधा नमः । इति पितृतीर्थेन दद्यात् । इदं पितृभ्यः स्वधा न मम । तत्रोदकस्पर्शः । इति पितृयज्ञः ।

गृह्याग्निमतस्तु पितृ(त्र्यो)वलिरेव नित्यश्राद्धस्य सिद्धिर्न पृथक् निरग्निकस्य(स्तु) पृथक्कर्तव्यम् । यावत्कर्म प्राक्संस्थमुदक्संस्थं वा कर्तव्यम् । ततो यज्ञोपवीती भूत्वा हस्तं पात्रे प्रक्षाल्य वायव्यां दिशि निनयेत् । ॐ यक्ष्मैतत्ते निर्णेजनम् । इदं यक्ष्मैतत्ते निर्णेजनं न मम । यथोक्तनानास्थाने गृहद्वारादौ वलिदानासम्भवे उक्तं छन्दोगपरिशिष्टे कात्यायनेन—

"एकत्र चे(त्कृत्सा)दविकृष्टा भवन्तीतरेतरासंसक्ताश्चे"ति । गृहद्वारादेर्यथोक्तस्थाने वलिदानासम्भव एकत्र चेदेकस्मिन्नेव स्थाने यथा वलयो दीयन्ते तदा अविकृष्टा अव्यवहिता इतरेतरासंसक्ताश्च परस्परमसंलग्नाश्च दातव्या इत्यर्थः । अस्मिन् पक्षेऽग्नेः पश्चिमतश्च

तुरस्रे मण्डले द्वारादिकं प्रकल्प्य यथोक्तस्थाने वलिदानं कार्यम्। वलीनभिधायाह छन्दोगपारिशिष्टे कात्यायनः—

"पिण्डवच्च पश्चिमा प्रतिपत्तिरि"ति। पिण्डवत् पिण्डानां या प्रतिपत्तिः, पिण्डास्तु (१)गोऽजविप्रेभ्यो दद्यादग्नौ जले ऽपि वे"त्यनेन विहिता सैव वलीनां पश्चिमा द्वितीया प्रतिपत्तिरित्यर्थः।

ततो बृहत्पराशरोक्तकल्पेन—(२)"त्वमग्ने द्युभि" (शु० य० सं ११।२७) रित्येकया (३)"आ ब्रह्मन्नि"त्येकया (शु० य० सं० २२।२२) (४)"अहाव्यग्न" (य० सं २०।७९) इत्येकया—

"स्वरेण वर्णेन च यद्विहीनं तथैव हीनं क्रियया ऽपि यच्च।

---

(१) एवं निर्वपणं कृत्वा पिण्डांस्तांस्तदनन्तरम्।
गां विप्रमजमग्निं वा प्राशयेदप्सु वा क्षिपेत्।
(म० स्मृ० ३।२६०)

(२) ॐ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि। त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः। (शु०य० सं० ११।२७) इति।

(३) ॐ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूरऽइषव्योऽतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतान्निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्। (शु० य० सं० २२।२२)।

(४) ॐ अहाव्यग्ने हविरास्ये ते स्रुचीव घृतञ्चम्वीव सामः। वाजसनिꣳ रयिमस्मे सुवीरम्प्रशस्तन्धेहि यशसम्बृहन्तम्। (शु० य० सं० २०।७९)।

तथातिरिक्तं मम तत्त्वमस्त्र ततस्तवाग्ने परिपूर्णमे(व)तत्" ॥
एभिर्मन्त्रैरग्नेः प्रसादनम् ।

(१) "त्र्यायुषमि" (शु० य० सं० ३।६२) त्यनेन भस्मना त्रिपुण्डधारणम् ।

( अथ ब्रह्मयज्ञः । )

अथ पूर्वो(र्वं)न कृतश्चेदत्र यथाशक्ति पूर्ववद् ब्रह्मयज्ञः(२) । ततोऽग्नेः पश्चिमतः स्वासने प्राङ्मुखोपविश्य देश-

---

( १ ) ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् । ( शु० य० सं० ३।६२ ) इति ।

अत्र सूत्रे विशेषः—त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवाय दक्षिणेंऽसे हृदि च त्र्यायुषमिति प्रतिमन्त्रम् । ( पा० गृ० २।४ ) इति । अत्र प्रकरणे त्र्यायुषकरणं सूत्रकारानुक्तमपि प्रसिद्धत्वात् शिष्टपरम्पराचरितत्वात्क्रियते ।

(२) देवतामुद्दिश्य द्रव्यत्यागो यागः । (का०श्रौ० १।२।२।) (पू० मी० ४।२।सू० २७।२८) स च ब्रह्मयज्ञादिषु नास्ति । तत्कथमेतेषु यज्ञशब्द इत्याशङ्क्य तेषां यज्ञत्वमुपपादयितुमृच उदाहरत्याश्वलायनः स्मार्तकल्पे—"यः समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये । यो नमसा स्वध्वरः" । ( ऋ० मं० ८।१९।५ ) अस्यार्थः—यो मर्तो मर्त्यः समिधा अग्नये विभक्तिव्यत्ययः । अग्निं ददाश दाशतिर्दानकर्माऽन्यत्र, इह तु प्रीणने द्रष्टव्यः प्रीणाति । य आहुती तृतीयैकवचनस्य पूर्वसवर्णं दीर्घः । यश्चाहुत्याग्निं प्रीणाति । यो वेदेन= यश्च वेदेनाग्निं प्रीणाति । यो नमसा=यश्च नमस्कारेणाग्निं प्रीणाति । यच्छन्दश्रुतेस्तच्छब्दोऽध्याहार्यः । सः स्वध्वरः सर्वोऽपि शोभनयज्ञः न केवलं य आहुत्या प्रीणाति स एव किञ्च—"तस्येदर्वन्तो रंहयन्त

कालौ सङ्कीर्त्य "इषे त्वे" ( य०सं० १।१ ) त्यादि "खं ब्रह्म" ( य० सं० ४०।१८ )न्तकस्य माध्यन्दिनीयकस्य वाजसनेयकस्य यजुर्वेदाम्नायस्य विवस्वान् ऋषिः गायत्र्यादीनि सर्वाणि छन्दांसि सर्वाणि यजूंषि सर्वाणि सामानि प्रतिलिङ्गोक्ता देवता ब्रह्मयज्ञारम्भे विनियोगः ।

केचित्तु दशप्रणवसहितेषु इत्येवं प्रयोगः । दशप्रणवद्वैधाप्रकारः ।

---

आशवस्तस्य द्युम्नितमं यशः । न तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत्" । ( ऋ० ८।१६।६ ) तस्येत्=तस्यैव अर्वन्तः=अश्वाः रंहयन्ते=गमयन्ति कं रथं आशवः=क्षिप्रगामिनः । द्युम्नितमं द्युम्नमिति हिरण्यनाम (नि० ३।६) । अतिशयेन द्युम्नवत् द्युम्नितमम् । एवं भूतयशोऽपि तस्यैव । तस्य देवकृतमंहः व्यसनं कुतश्चनापि न नशत् न व्याप्नोति मर्त्यकृतं चांहो न नशद् इति । तथा च—"अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः । घृतात्स्वादीयो मधुनश्च वोचत" (ऋ० ४। ८।२४। २० ) इति । तथैव—"आ ते अग्न ऋचा हविर्हृदा तष्टं भरामसि । ते ते भवन्तूक्षण ऋषभासो वशा उत" ( ऋ० ६। १६ । ४७ ) स्तुतिलक्षणं गां वाचं यो न रुणद्धि तस्मै अगोरुधाय गविषे गामिच्छते द्युत्ताय द्युःस्थानाय दस्म्यमनुरूपं स्तुतिलक्षणं वचः घृताद् मधुनश्च स्वादीयः स्वादुत्तरं दर्शनीयं वोचत ब्रूत हे मदीया ऋत्विजः पुत्रपौत्रा वा । मम स्वभूतमिदं वच एव घृताच्च मधुनश्च स्वादीयोऽस्त्विति । न केवलं घृताच्च मधुनश्च, मांसादपि स्वादुतरमिति दर्शयितुमियं ऋक्—'आत' इति । हे अग्ने तुभ्यं हृदा तष्टं हृदयेन चिकीर्षितं हविः ऋचा ऋग्रूपेण आभरामसि आहरामा वयम् । ते, लिङ्गवचनभेदः तादृग्रूपं हविः ते तव उक्षाणः ऋषभाश्च वशाश्च भवन्ति । वन्ध्या गावो वशाः ।

"आदौ प्रणवमुच्चार्य व्याहृतीः प्रणवान्विताः ।
मन्त्रादौ प्रणवः कार्यो मन्त्रान्ते प्रणवः पुनः ॥
ततो व्याहृतिसंयुक्तस्त्वन्ते च प्रणवः (सदा)पुन"–
रित्येकः पक्षः ॥

अपरस्तु—

"आदौ प्रणवमुच्चार्य सप्त व्याहृतयस्ततः ।
मन्त्रादौ प्रणवः कार्यो मन्त्रान्ते प्रणवः पुन"रिति

रुद्रकल्पद्रुमोक्तेः । एवं प्रणवव्याहृति(भि)र्गायत्रीं चाम्नायस्वरेणाधीत्य' गृह्यकारिकायां विशेषः—

"बद्धाञ्जलिर्दर्भपाणिः प्राङ्मुखस्तु कुशासनः ।
वामाङ्घ्रिमुत्तमं कृत्वा दक्षिणं तु यथाक्रमम् ।
दक्षिणे जानुनि करोत्यञ्जलिं तमृषेर्मतात्" ।

इति 'विशेषः'। तत्रादौ 'छन्दःपुरुषन्यासं कृत्वा ब्रह्मयज्ञार(म्भे)म्भो' इति वचनात् । सर्वानुक्रमसूत्रे—तद्यथा—

ॐ तिर्यग्बिलाय चमसोर्द्ध्वबुध्नाय छन्दःपुरुषाय नमः शिरसि । ॐ गौतमभरद्वाजाभ्यां नमः नेत्रयोः । ॐ विश्वामित्रजमदग्निभ्यां नमः मन्त्रावृत्या श्रोत्रयोः । ॐ वशिष्ठकश्यपाभ्यां नमः नासापुटयोः । ॐअत्रये नमः वाचि । ॐगायत्र्यै छन्दसेऽग्नये नमः शिरसि । ॐ उष्णिहे छन्दसे सवित्रे नमः ग्रीवायाम् । ॐ बृहत्यै छन्दसे बृहस्पतयेऽनूके । अनूकः पृष्ठवंशः । ॐ बृहद्रथन्तराभ्यां द्यावापृथिवीभ्यां मन्त्रावृत्या बाह्वोः । ॐ त्रिष्टुभे छन्दसे इन्द्राय नमः मध्ये । मध्यमुदरम् । ॐ जगत्यै छन्दसे आदित्याय नमः,

मन्त्रावृत्त्या श्रोत्रयोः । ॐ अतिच्छन्दसे प्रजापतये नमः लिङ्गे । ॐ यज्ञायज्ञियच्छन्दसे वैश्वानराय नमः पायौ=गुह्ये । ॐ अनुष्टुभे छन्दसे विश्वेभ्यो देवेभ्यो नमः मन्त्रावृत्त्या ऊर्वोः । ॐ पङ्क्त्यै छन्दसे मरुद्भ्यो नमः । मन्त्रावृत्त्या अष्ठीवन्तौ । अष्ठीवान् जानु । ॐ द्विपदायै छन्दसे विष्णवे नमः, मन्त्रावृत्त्या पादयोः । ॐ विच्छन्दसे वायवे नमः प्राणेषु=नासिकारन्ध्रेषु । ॐ न्यूनाक्षरच्छन्दसे अद्भ्यो नमः, हस्तद्वयविपर्यासेन मस्तकादिपादान्तं सर्वाऽङ्गेषु । वेदमयः सम्पद्यते शापानुग्रहसमर्थो भवति ब्राम्ह्यं तेजश्च वर्द्धते न कुतश्चिद्भयं विदन्ते ऋङ्मयो यजुर्मयः साममयो ब्रह्ममयो ऽमृतमयः सम्भूय ब्रह्मैवाभ्येति तस्मादेतन्नाब्रह्मचारिणे नातपस्विने नासंवत्सरोषिताय न चाप्रवक्त्रेऽनुब्रूयादित्याह भगवान् कात्यायनः ।

"प्रणवादौ प्रयुञ्जीत व्याहृतीस्तदनन्तरम् ।
सावित्रीं चानुपूर्व्येण ततो वेदादिमारभेत्" ॥

"इषे त्वे"त्यादि वेदमारभ्यानुवाकशो यजुषो वा संहितां, ब्राह्मणं चाध्यायशो ब्राह्मणशो वा प्रणवावसानं यथाशक्ति प्रत्यहमधीयानो मन्त्रं ब्राह्मणं च समाप्य पुनरेवमेवारभ्य समापयेत् । प्रणवव्याहृतीर्गायत्रीपूर्वकं तु प्रतिदिनं पठेत् । एवमेवेतिहासपुराणादीन् पठेत् । अशक्तौ तु गायत्रीजपमात्रम् ।

तदुक्तम्—

"ब्रह्मयज्ञस्य सिद्ध्यर्थं गायत्र्येकां जपेत्ततः ।
तेन प्रीतितरां याति देवदेवो जनार्दनः" ॥

इति वचनात् । एवं द्विवेदाध्यायी त्रिवेदी चतुर्वेदी आरभ्
समाप्य पुनः पठेत् । अथवा 'इषे त्वोर्ज्जे त्वा'प्रथमाकण्डिका, अन्
'हिरण्मयेन' ( य० सं० ४०।१७ ) 'व्रतमुपैष्यन्' ( श०
बा० १।१।१।१ ) 'प्राश्नीयात् पुत्रादाशुरिवासिनः' (श०ब्रा०
१४।६।४।३३) 'अग्निमीळे पुरोहितम्' (ऋ० १।१।१) । 'अग्
आयाहि वीतये' ( सामवे० १।१।१ ) 'शन्नोदेवी रभिष्टये
(अ० वे० १।१ ) 'अथानुवाकान् वक्ष्यामि' ( अनुवाकसूत्रम् १ )
'मण्डलं दक्षिणमक्षिहृदयं' ( सर्वानुक्रमणी १ ) 'अथातोऽधिकार
फलयुक्तानि कर्माणि' ( का० श्रौ० १।१।१–२ ) 'अथातो गृह्य
स्थालीपाकानां कर्म' (पा० गृ० १।१) 'अथ शिक्षां प्रवक्ष्यामि
(पा० शि० १।१) 'पञ्चसंवत्सरमयं० (वे० ज्यो० १) 'मयरसतजभन
(पि०सू० १) 'गौः ग्मा ज्मा' (निघण्टु) वृद्धिरादैच् (पा० १।१।१
'समाम्नायः समाम्नातः' ( नि० १।१ ) 'अथातो धर्मजिज्ञासा
(पू० मी० १।१।१) 'अथातो ब्रह्मजिज्ञासा' (उ० मी० १।१।१
'योगीश्वरं याज्ञवल्क्यम्' (या० स्मृ० १।१) 'नारायणं नमस्कृत्य
( म० भा० १।१।१ ) ब्रह्मणे नम इति त्रिरुच्चार्य ।

इति विद्यातपो योनिरयोनिर्विष्णुरीडितः ।
वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ॥

इति मन्त्रेण विष्णवे समर्पयेत् । ब्रह्मयज्ञार्थान् कुशानुत्तरत
प्रक्षिप्याचामेत् । ब्रह्मयज्ञस्तु अमावास्यादिष्व(१)नध्यायेऽप्

---

(१) "वातेऽमावास्यायांँसर्वानध्यायः" ( पा० गृ० २।१३।१
"पर्वणि नाध्येतव्यमि"त्यादयो ये मन्त्राणामध्ययनकाले स्वधर्मास

कर्तव्य एव "अहरहः स्वाध्यायमधीते" (श० ब्रा० ११।५।६।८) (कौ० गृ० २ पत्रे )ति श्रुतेः ।

ब्रह्मयज्ञे तु द्वावेवानध्यायौ, आत्माऽशुचिस्तदा एकः देशाशुचिस्तदा एकः। तत्रानध्याये ब्रह्मयज्ञ अल्पीयान् मनसा च कर्तव्यः । इति ब्रह्मयज्ञः ।

( अथ मनुष्ययज्ञः )

मनुष्ययज्ञार्थे षोडशग्रासपरिमितमन्नं तत्राप्यशक्तौ ग्रासं वा ग्रासार्द्धं अन्नमुद्धृत्य सङ्कल्पयेत् । कण्ठं कृत्वा सनकादिमनुष्येभ्यो हन्त ते नमः । इदं सनकादिमनुष्येभ्यः । इति पञ्चमो मनुष्ययज्ञः।

ततः सव्यं देवतानैवेद्यम् । तदुक्तं गङ्गाधरेण—

"हन्तकारस्य विप्रस्य पूजनं परिवेषणम् ।
हस्तं प्रक्षाल्य सङ्कल्पस्त्वपोशानं तु सर्वतः ॥
नैवेद्यं देवतानां च कृत्वाऽनुज्ञापयेद्द्विजान् ।
गोग्रासं बलयश्चाथ भिक्षादानादिकं ततः" ॥

आह्निके—

"सुसंस्कृतान्नमध्वाद्यैः पयोदधि नियोजयेत् ।
फलमूलव्यञ्जनानि मोदकांश्च निषेधयेत्" ॥

अथ गोग्रासः—

"सौरभेयः सर्वहिताः पवित्राः पुण्यराशयः ।

---

कर्मकालेऽपिस्युरिति पूर्वपक्षे-निषेधस्य ग्रहणाध्यापनविषयत्वेन क्रतुप्रयोगे तन्निषेधाभावात् क्रतावनध्यायेऽप्यस्ति मन्त्रप्रयोग इति जैमिनेः ( १५।३ सू० १८-१९ ) सिद्धान्तः ।

प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः" ॥

इति मन्त्रेण गवे दद्यात् । इदं गोभ्यः ।

अथ वायसबलिः—

"ऐन्द्रवारुणवायव्या याम्या वै नि(नै)र्ऋति(ता)स्तथा ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम्" । इति वायसेभ्यः ।
"द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ ।
ताभ्यां पिण्डं प्रयच्छामि स्यातामेतावहिंसकौ" । इदं श्वभ्यः ।
"पिपीलिकाः कीटपतङ्गकाद्या बुभुक्षिताः कर्मनिबद्धबद्धाः ।
प्रयान्तु ते तृप्तिमिदं मयान्नं तेभ्यो विसृष्टं सुखिनो भवन्तु" ।

इति कीटबलिः ।

इति बलित्रयं गृहाङ्गणे दद्यात् । तेभ्यो न स्पर्शः । तदुक्तम्—

"काकश्वादिबलिभ्यस्तु सङ्कल्पानन्तरं स्पृशेत् ।
स्नानं कृत्वा सचैलं तु पञ्चगव्येन शुद्ध्यति" ॥

ततः पादौ प्रक्षाल्याचम्य गृहमागत्य बालवृद्धादीन् भोजयेत्(१) । निरग्निकस्य प्रयोगमग्रे वक्ष्यामः ।

इति स्मार्तोल्लासे गृह्याग्निमत्कर्तृके गृह्योक्तवैश्वदेवप्रयोगः समाप्तः ।

---

(१) अत्र कारिकाः—

स्वाहान्तास्ता जले वाग्नौ कुर्यात्पञ्चाहुतीः क्रमात् ।
ब्रह्मा प्रजापतिर्गृह्याः कश्यपोऽनुमतिस्तथा ।

## ( अथ वैश्वदेवनिर्णयः । )

अथेदानीं तदुपयोगिनिर्णय उच्यते ।
"अकृते वैश्वदेवे तु भिक्षुके गृहमागते ॥
उद्धृत्य वैश्वदेवार्थं भिक्षुकं तु विसर्जयेत् ।
वैश्वदेवाकृतं पापं शक्तो भिक्षुर्व्यपोहति (हितुम्)" ॥

---

चतुर्थ्यन्तैर्जलं क्षिप्त्वा वैश्वदेवबलिं चरेत् ।
पर्जन्य आपः पृथिवी धातापि च विपूर्वकः ।
चतुर्वायुः प्राच्यवाची प्रतीचीचाप्युदीच्यपि ।
ब्रह्मान्तरिक्षसूर्याश्च विश्वेदेवास्ततः परम् ॥
विश्वा भूतान्युषश्चापि भूतानां च पतिस्तथा ।
अपसव्येन सतिलं पितृभ्यश्च स्वधा नमः ॥
सनकादि सप्त मर्तेभ्यो हन्त कण्ठापवीतवान् ।
यक्ष्मैतत्ते च सव्येन जलनिर्णेजनं नमः ॥
ये च (दद्यात्) काकश्वचाण्डालाः पतिताः पापसङ्गिनः ।
ततः कीटपतङ्गाश्च गावः श्वानौ ततः परम् ॥
चतुर्थ्यन्तानुपादाय नमोन्तान् क्रमतः पठेत् ।
देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्यसङ्घाः ।
प्रेताः पिशाचास्तरवः समन्ताद्ये चान्नमिच्छन्ति मया प्रदत्तम् ।
कीटाः पतङ्गास्तरवश्च वृक्षा जले स्थले ये विचरन्ति जीवाः ।
ते तृप्तिमायान्तु मया प्रदत्तं तेभ्यो विसृष्टं भुवि चान्नमेतत् ।
येषां न माता न पिता न बन्धुर्न चान्नसिद्धिर्नतथान्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत्तेचान्नतृप्ता मुदिता भवन्तु । इति ।
स्मार्तगङ्गाधरे—
उद्धृत्याग्निं पचेदन्नं मणिकस्यात्र वारिणा ।

साग्नेः सर्वत्र श्राद्धादौ वैश्वदेवः—

"पक्षान्तं कर्म निर्वृत्य वैश्वदेवं च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं ततः" ॥

पक्षान्तं =अग्न्यन्वाधानम् । पिण्डयज्ञं=पिण्डपितृयज्ञः । अन्वाहार्यकं=दर्शश्राद्धम् ।

"पित्र्यर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च ।

---

श्राद्धार्थकं तथा चैव पञ्चयज्ञार्थमेव च ॥
मातृपूजा ततः श्राद्धं कृत्वाग्निमपरेण तु ।
उपविश्याभिमन्त्र्यापः प्रोक्ष्यान्नं च द्वितीयकम् ॥
अर्चनं चार्चयेत्प्राणान् कर्मसंकल्प एव च ।
देवतानामभिध्यानं कृत्वा पात्रेऽन्नमुद्धरेत् ॥
अभिघार्य घृताद्येन पर्युक्ष्याग्निं च वारिणा ।
होमो भूतबलिश्चान्यन्नित्यश्राद्धं समाचरेत् ॥
प्रक्षाल्य पादानुपवेश्य विप्रान्दत्वासनं पूजनमेव तेषाम् ।
प्रक्षालनं भाजनविप्रयाणेरन्नं तदालभ्य तिलोदकेन ॥
कृत्वान्नसङ्कल्पमिदं हि नित्यं श्राद्धं पुराणा मुनयो वदन्ति
आस्तीर्य स्वासने दर्भानुपविश्य कुशत्रयम् ।
धारयन्नचलो हस्तौ दक्षिणोरौ ततः पठेत् ॥
सोङ्कारव्याहृतीस्तिस्रो गायत्रीं संहितादिकम् ।
ॐकारं च तथा चान्ते स्वस्ति दर्भान्क्षिपेदुदक् ।
हन्तकारस्य विप्रस्य पूजनं परिवेषणम् ॥
हस्तक्षालनसङ्कल्पस्त्वपोशानं च सर्वतः ।
नैवेद्यं देवतानां च कृत्वानुज्ञापयेद्द्विजान् ॥
गोग्रासं बलयश्चापि भिक्षादानादिकं ततः ।
यान्तु मातृगणा उक्त्वा मातॄणां च विसर्जनम् ॥ इति ।

वैश्वदेवं न पित्र्यर्थं न दार्शं वैश्वदेविकमि"

ति लोगाक्षिस्मृतेः ।

अत्र साग्निकस्त्रेताग्निरिति हेमाद्रिः । कात्यायनानां तु सर्वार्थमेक एव पाको "वैश्वदेवादन्नादि"( गृ० सू० २।९।२ )ति सूत्रात् । अन्येषां तु पृथक् । अन्येषां=स्मार्ताग्निरहितानाम् ।

"श्राद्धात् प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः ।
एकादशाह्निकं मुक्त्वा तत्र ह्यन्ते विधीयते" ॥

इति हेमाद्रावुक्तेः । तत्रैव परिशिष्टे—

"सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च ।
अग्रतो वैश्वदेवः स्यात् पश्चादेकादशेऽहनि" ॥

---

अत्र सूत्राणि । अथातः पञ्चमहायज्ञाः ॥ १ ॥ वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयाद्ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतय इति ॥२॥ भूतगृह्येभ्यो मणिके त्रीन् पर्जन्यायाद्भ्यः पृथिव्यै ॥३॥ धात्रे विधात्रे च द्वार्ययोः ॥ ४ ॥ प्रतिदिशं वायवे दिशां च ॥ ५ ॥मध्ये त्रीन्ब्रह्मणेऽन्तरिक्षाय सूर्याय ॥६॥ विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यस्तेषामुत्तरतः ॥ ७ ॥ उषसे भूतानां च पतये परम् ॥ ८ ॥ पितृभ्यः स्वधा नम इति दक्षिणतः ॥ ९ ॥ पात्रं निर्णिज्योत्तरापरस्यां दिशि निनयेद्यक्ष्मै तत्तः इति ॥ १० ॥ उद्धृत्याग्रं ब्राह्मणायावनेज्य दद्याद्धन्त त इति ॥ ११ ॥ यथार्हं भिक्षुकानतिथींश्च सम्भजेरन् ॥ १२ ॥ बालज्येष्ठा गृह्या यथार्हमश्नीयुः ॥ १३ ॥ पश्चाद् गृहपतिः पत्नी च॥ १४ ॥ पूर्वो वा गृहपतिः तस्माद् स्वादिष्टं गृहपतिः पूर्वोऽतिथिभ्योऽश्नीयादिति श्रुतेः ॥ १५ ॥ अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठाद्देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात् ॥ १६ ॥ (पा० गृ० २।९।) ।

श्राद्धात् पूर्वं वैश्वदेवं स्मार्ताग्निमतां केवलनिरग्निक(स्तु)स्य
तु—अग्नौ करणोत्तरं विकिरोत्तरं वा होममात्रं पृथक्पाठेन भूतय
ज्ञादि श्राद्धान्त एव । अत्र मूलं हेमाद्रि-चन्द्रिकादौ स्पष्टम् । सर्वेप
श्राद्धान्ते वा तत्पाकेन वैश्वदेवनित्यश्राद्धादीनि तृतीयः ।

"श्राद्धं निर्वृत्य विधिवद्वैश्वदेवादिकं तथा ।
कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं तथे"ति

पैठीनसिस्मृतेः ।

ततः श्राद्धशेषात् "श्राद्धेऽह्नि श्राद्धशेषेण वैश्वदेवं समाचरेदि"ति
चतुर्विंशतिमताच्च । एवं वैश्वदेवकालत्रय अपरार्के
शाङ्खायनपरिशिष्टमुदाहृत्यैव व्यवस्थोक्ता—

"आदौ वृद्धौ क्षये चान्ते दर्शमध्ये महालये ।
एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयत" इति ॥

बहुस्मृत्युक्तत्वात् सर्वेषां श्राद्धान्त एवेति मेधाति-
थिस्मृतिरत्नावल्यादयो बहवः । बह्वृचानां 'श्राद्धान्ते एवे'ति
वोपदेवः । मध्य(म)पक्षस्त्वन्यशाखापर इति स एव । हेमाद्रि
स्तु वृद्धावप्यन्ते एव वैश्वदेवस्तु कातीयानां स्मार्ताग्निमतामादावेव
सिद्धान्तः । एतद्दिवासम्भवे रात्रावपि कार्यम् ।

तथा बृहन्नारदीये—

"दिवोदितानि कार्याणि (कर्माणि) प्रमादादकृतानि वै ।
यामिन्याः प्रहरं यावत् कर्माणि तत्र कारयेत्" ॥

अत्र विशेषः—

"अकृते वैश्वदेवे चेदस्तमेति गभस्तिमान् ।

वैश्वदेवं ततः कुर्यात्सायं होमं समाचरेत्" ॥

अत एव वैश्वदेवो वाजसनेयीनां तु दिवैव न रात्रौ ।

इति स्मार्ताग्नीनां वैश्वदेवनिर्णयः ।

## ( अथ सायंप्रातर्होमकालः । )

अथ सायंप्रातर्होमः । तत्रादौ होमकालस्तूच्यते । अस्तमित-लक्षणं कात्यायनेनोक्तम् —

"यावत्सम्यङ् न भाव्यन्ते नभस्यृक्षाणि सर्वतः ।

(१)लोहितत्वं च नापैति (नोपैति)तावत्सायं तु हूयते" ॥

अनुदितस्तु द्विविधः, अनुदितश्च समयाध्युषितश्च ।

तथा च मनुः—

"उदितेऽनुदिते चैव समयाध्युषिते त(२)थे"ति ।

तत्रानुदितः स्पष्टतारकोपलक्षितः ततः परमुदयात् प्राक् समयाध्युषितः सम्पूर्णादित्यमण्डलदर्शनोपलक्षित उदितः ।

अन्यच्च—

"प्रातर्होमः सङ्गवान्ते कालस्त्वनुदिते तथा ।

सायमस्तमिते होमः कालस्तु नवनाडिकाः" ॥

मुख्यकाले यदा होमो न भवति तदा गौणकालेऽपि कार्यः ।

---

(१) न च लौहित्यमापैतीति (६।३) का० स्मृ० पाठः ।

(२) म० स्मृ० २।१५ ।

तथाह मण्डनः—

"मुख्यकाले यदावश्यं कर्म कर्तुं न शक्यते ।
गौणकालेऽपि कर्तव्यं गौणोऽप्यत्रेदृशो भवेत्" ॥
"आ सायमाहुतेः कालात् कालोऽस्ति प्रातराहुतेः ।
प्रातराहुतिकालात्प्राक् कालः स्यात्सायमाहुतेरि"ति ॥

मुख्यकालातिक्रमे प्रायश्चित्तपूर्वं गौणकालेऽनुष्ठानम् । गौणकालातिक्रमे तु लोप एव । मुख्यगौणकालातिक्रमे फलमाह देवयाज्ञिके—

"गणितात्सिद्धितः कालः काले तिष्ठन्ति देवताः ।
वरमेकाहुतिः काले अकाले कोटिसङ्ख्यया ॥
कालातीते च यः कुर्याच्छ्राद्धं होमं जपं तथा ।
व्यर्थं भवति तत्सर्वमपमृत्युं विषं तथा ॥
परद्रव्येण यो होम आसुरस्तस्य देवता ।
कालातिक्रमदोषे तु राक्षसस्तस्य देवता ॥
अशुचिर्यत्र होमेऽपि पिशाचस्तस्य देवता ।
तस्मात् काले शुचिर्द्रव्ये होतव्ये(व्यं) नान्यथा क्वचित्" ॥

( अथ होमाधिकारिणः । )

अथ होमाधिकारी उच्यते ।

"ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एतैरेव हुतं यस्य तद्धुतं स्वयमेव तु" ।

गृह्यकारिकायाम्—

"पुत्रो गुरुः सौहृदभागिनेयः कन्यापतिस्तत् सुतपौत्रशिष्याः ।

पितृव्यतत्पुत्रकमातुलाख्याः पत्नी ततोऽ(न्ये)तो हवनक्रियायाः"
"पत्नी कन्या च जुहुयाद् विना पर्युक्षणक्रियामि"ति ।
अत्र वचनात्पत्न्यादीनां मन्त्रपाठेऽधिकारः, केवलपर्युक्षणे नाधिकारः । त्यागे विशेषः—

"सन्निधौ यजमानः स्यादुद्देशत्यागकारकः ।
असन्निधौ तु पत्नी स्यादुद्देशत्यागकारि(णी)का" ॥

कात्यायनोऽपि—

"असमक्षे(क्षं) तु दम्पत्योर्होतव्यं नर्त्विगादि(भिः)ना ।
द्वयोरप्यसम(क्षं)क्षे तु(हि) भवेद्धुतमनर्थकम्(१)" ॥
असन्निधौ तु (पत्न्याः) पत्नी स्यादध्वर्युस्तदनुज्ञया ।
उन्मादे प्रसवे चर्तौ कुर्वीतानुज्ञया विना" ॥

मण्डनः—

"त्यागं तु सर्वथा कुर्यात्तत्राप्यन्यतरस्तयोः ।
उभावप्यसमर्थौ चेन्नियुक्तः कश्चन त्यजेत्" ॥

( होमद्रव्याणि । )

अथ होमद्रव्याणि स्मृत्यर्थसारे—

"पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः ।
सोमो मांसं तैलमापो दशैतान्यग्निहोत्रके ॥
स्यादग्निहोत्रवत् गृह्ये संस्कारो मन्त्रवर्जितः ।
यद्वा त्रिः प्रोक्षणं तेषां मांसमौपासनेन च ॥

---

( १ ) का० स्मृ० २०।१ ।

शालीश्यामाकनीवारव्रीहिगोधूमयावकाः ।
एतेषां तण्डुला होम्या यावनालप्रियङ्गवः ॥
प्रियङ्गवः शालयश्च गोधूमा व्रीहयो यवाः ।
स्वरूपेणापि होतव्या स्युः स्वरूपेण वै तिलाः" ॥

छन्दोगपरिशिष्टे च—

"हविष्येषु यवा (मुख्या) प्रोक्तास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादिसर्वालाभे(ऽप) विवर्जयेत्" ॥

स्मृत्यन्तरे—

"हविष्यान्नं तिला माषा नीवारा व्रीहयो यवाः ।
इक्षवः शालयो मुद्गाः पयो दधि घृतं मधु" ॥

तत्रैव—

"कृतमोदनसक्त्वादि तण्डुलादिकृताकृतम् ।
व्रीह्यादिचाकृतं प्रोक्तमिति द्र(ह)व्यं त्रिधा स्मृतम्" ॥

( अथाहुतिपरिमाणम् । )

आहुतिपरिमाणमाह बृहस्पतिः—

"प्रस्थधान्यं चतुःषष्टेराहुतेः परिकीर्तितम् ।
(१)तिलानां च तदर्द्धं तु तण्डुला व्री(हयः)हिभिः समाः
प्रस्थः प्रसृतिद्वितयं प्रस्थं मानचतुष्टयम्" । इति ।

बौधायनस्तु—

"व्रीहीणां वा यवानां वा शतमाहुतिरिष्यते" ।

---

( १ ) "तिलानां तु तदर्धं स्यात्तदर्धं स्याद्घृतस्य तु" इति
राशरसंहितापाठः ।

अगस्त्यः—

"द्रवद्रव्यस्य मानं स्याद्धारा गोकर्णदीर्घिका ॥
द्रवं स्रुवेण होतव्यं पाणिना कठिनं हविः ।
स्रुवपूर्णा द्रवाः प्रोक्ताः कठिना ग्रासमात्रकाः" ॥

सिद्धान्तशेखरे—

"अन्नं ग्राससमं प्रोक्तं लाजा मुष्टिमिता मता" ।

(होमे वर्ज्यब्राह्मणाः ।)

अथ होमे वर्ज्यब्राह्मणाः स्मृत्यन्तरे—

"काणः कुष्ठी सदाऽशुद्धः स्वयम्भूः श्यावदन्तकः ।
क्लीबोऽपि पतितः कृष्णः कुनखी शास्त्रवर्जितः ॥
हीनाङ्गोऽप्यधिकाङ्गस्तु भिन्नाङ्गः कर्कशः शठः ।
आचार्यऋत्विजश्चैव (काणादिदोषयुक्ताः) न शस्ता यज्ञकर्मणि ॥
एवमादिभवेद्यस्य शनैर्वंशक्षयो भवेत्" ।

यज्ञपार्श्वेऽपि—

"अन्यैः शतहुताद्धोमादेकः शिष्यहुतो वरम् ।
शिष्यैः शतहुताद्धोमादेकः पुत्रहुतो वरम् ।
पुत्रैः शतहुताद्धोमादेकः स्वात्महुतो वरम्" ॥ इति ।

(सायंप्रातर्होमस्यैकद्रव्यत्वम् ।)

अत्रोपयुक्तं किञ्चिदुच्यते । सर्वेषु काम्येषु नित्येषु वा येन होत्रा द्रव्येण च सायं हुतं तेनैव प्रातर्होतव्यम् ।

"सायं होमेषु यद्द्रव्यं प्रातर्होमेषु तद्भवेत् ।
भिन्नद्रव्यहुतं यज्ञमहुतं तस्य तद्भवेत्" इति ॥

( अथ समिल्लक्षणम् । )

तदुपयोगिसमिल्लक्षणं च स्मृत्यर्थसारे—

"पालाशखदिराश्वत्थशम्युदुम्बरजा समित् ।
अपामार्गार्कदूर्वाश्च कुशाश्च अपरे विदुः ॥
सत्वचः समिधः कार्या ऋजुश्लक्ष्णसमास्तथा ।
शस्ताः दशाङ्गुलाः शुद्धाः द्वादशाङ्गुलिकास्तथा ॥
आर्द्राः पक्काः समच्छेदास्तर्जन्यङ्गुलिवर्तुलाः ।
उत्पाटिताश्च द्विशाखाः कृमिदोषविवर्जिताः ॥
ईदृशा होमयेत्प्राज्ञः प्राप्नोति विपुलां श्रियम्" ।

यद्वा—

"समित्पवित्रं वेदश्च त्रयं प्रादेशसम्मितम् ।
इध्मश्च द्विगुणः कार्यस्त्रिगुणः परिधिः स्मृतः" ॥
"समित्पत्रकुशादीनि ब्राह्मणः स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः" ॥

गृह्यकारिकाऽपि—

"ग्रामादुदक्प्रागतिदूरदेशात् साधारणाद्धि हरन्नरो यः ।
स्वयं प्रशस्ताः समिधो न शूद्राद्धोमार्थमेता विहितद्रुमेभ्यः ॥
प्रादेशमात्रा द्विषडङ्गुला वा ऋज्व्यः कनिष्ठाग्रसमा अदग्धाः ।
प्रादेशिनीप्रायसमा अपि स्युः स्थाप्या मरुद्वर्त्मनि मण्डपादौ ॥

ह्रस्वा विदीर्णा विदला द्विशाखा वक्राः कृशाः स्थूलतराश्च दीर्घाः।
त्वचा विहीना घुणकैर्विदष्टास्त्याज्या यतो दुष्टफलास्युरेताः ॥
प्लक्षः पलाशो वटबिल्वगुल्मदेवद्रुमौदुम्बरखादिराख्याः ।
शालाः समित् श्रीतरुवञ्जुलाख्याः श्रीपर्णवैकङ्कतचन्दनाख्याः॥
रोहीतकोर्ध्वः सरलश्च भूर्जः समिद्द्रुमाः स्युर्गदिता इमेऽत्र ।
पालाश्यः समिधः कार्याः खादिर्यस्तदलाभतः ।
शमीरोहितकाश्वत्थास्तदभावेऽर्कवेतसौ ।
एषामभावे सकलो द्रुमः स्यादस्मिन्निषिद्धान्निखिलान् विहाय ।
श्लेष्मांतकः शाल्मलिराजवृक्षविभीतकानीपकदम्बनिम्बाः ॥
स्फुरत् कपित्थोनलकोविदारो बिल्वः करंजः कथिता निषिद्धाः" ॥इति।

( व्रतादिषु प्रतिनिधिनिरूपणम् । )

अथ व्रतादिषु प्रतिनिधिस्तदुच्यते स्मृत्यन्तरे—

"भार्या भर्तु(पत्यु)र्व्रतं कुर्याद् भार्यायाश्च पतिर्व्रतम् ।
असामर्थ्ये परस्ताभ्यां व्रतभङ्गो न जायते ॥
पुत्रं वा नियमोपेतं भगिनीं भ्रातरं तथा ।
एषामभावे (एत्वान्यं) चान्यं वा ब्राह्मणं वा नियोजयेत् ।
पितृमातृभ्रातृपतिगुर्वर्थे च विशेषतः ।
उपवासं प्रकुर्वाणः पुण्यं शतगुणं ( लभेत् ) भवेत् ॥
मातामहादीनुद्दिश्य एकादश्यामुपोषणे ।
कृते ते तु फलं विप्राः समग्रं समवाप्नुयुः ॥
भर्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखा ( पि च ) तथा ।

यात्रायां धर्मकार्येषु जायन्ते प्रतिहस्तकाः ॥
एभिः कृतं महादेवि स्वयमेव कृतं भवेत् ।
स्वयं कर्तुमशक्तश्चेत्कारयीत पुरोधसा ॥
काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके च सः ।
काम्ये ऽप्युपक्रमादूर्ध्वं केचित् प्रतिनिधिं विदुः ॥
(१)अश्रुपातश्च रोषश्च कलहस्य कृतिस्तथा ।
उपवासवता सोऽपि सद्यो भ्रंशयते श्रियम् ॥
(२)ध्यानव्रतादिनियमे ध्याने ज्ञाने हुते जपे ।
यत्नेनापि कृतं सर्वं क्रोधितस्य वृथा भवेत्" ॥

इति प्रतिनिधिः ।

---

( १ ) 'अश्रुप्रपातो रोषश्च कलहस्य कृतिस्तथा ।
उपवासाद्व्रताद्वापि सद्यो भ्रंशयति श्रिय'—
मिति निर्णयसिन्धु ( १३९ प० ) पाठः ।

( २ ) 'दानं व्रतानि नियमा ज्ञानं ध्यानं हुतं जपः ।
यत्नेनापि कृतं सर्वमि'ति निर्णयसिन्धुपाठः ।

## ( अथ सायंहोमप्रयोगः । )

अथ प्रयोगः कर्मकारिकायां गृह्यमते—

"कृत्वा सन्ध्यां यथोक्तां हुतभवनमियाद्भार्यया सार्द्धमग्नेः
पश्चात् प्रागुक्तरीत्या ह्युपविशति हरिं संयमेत् पूर्वकृत्स्नम् ।
पश्चात्संकल्प्य दध्ना हवनमिति चरेत्तण्डुलैरक्षतैर्वा
सायंहोमं करिष्ये स्मृतिरथ च मुनेश्छन्दसो देवतायाः" ॥

अथ (ततः) स्मार्ताचमनम् ।

"कृत्वाऽऽदौ पादशौचं विमलमथ जलं त्रिपिबेदुन्मृजेद्द्वि—
र्देशिन्यङ्गुष्ठयुग्मं सजलमभि(मुखं) मृशेन्नासिकारन्ध्रयुग्मम् ॥
अङ्गुष्ठानामिकाभ्यां नयनयुगयुतं कर्णयुग्मं कनिष्ठाङ्—
गुष्ठाभ्यां नाभिदेशे हृदयमथ जलेनाङ्गुलीभिः शिरोंऽसौ" ॥

सङ्कल्पार्थे तिथितत्वे भविष्ये—

"सङ्कल्पेन विना विप्र यत्किंचित् कुरुते नरः ।
फलं चाल्पाल्पकं तस्य धर्मस्यार्द्धक्षयो भवेत्" ॥

"सङ्कल्पः कर्म मानसमि"ति । तत्र विशेषमाह देवलः—

"मासपक्षतिथीनां च निमित्तानां च सर्वशः ।
उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत्" ॥

प्राणायामार्थे तदाह वृद्धमनुः—

"प्राणानायम्य कुर्वीत सर्वकर्माणि यत्नतः ( संयतः ) ।
प्राणायामैस्त्रिभिः पूतस्तत ओंकारमर्हति" ॥

प्राणायामलक्षणं छन्दोगपरिशिष्टे कात्यायनेनाभिहितम् ।

"भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः ।
महर्जनस्तपः सत्यं गायत्री च शिरस्तथा ॥
आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरिति शिरः ।
प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः ।
एता एतां सहानेन तथैभिर्दशभिः सह ।
त्रिर्जपेदायतः प्राणः प्राणायामः स उच्यते(१)" ॥

मुक्तिफलत्वादव्ययाः। एताः—सप्तव्याहृतयः । एतां—गायत्रीम्। अनेन—शिरसा सह । तथैभिर्दशभिः—प्रणवैः सह । आयतप्राणो-निरुद्धप्राणस्त्रिर्जपेदिति, अयमेकः प्राणायाम इत्यर्थः ।

योगियाज्ञवल्क्योऽपि—

"सव्याहृतीं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतः प्राणः प्राणायामः स उच्यते" ॥

कूर्मपुराणे ईश्वरगीतासु—

"प्राणः स्वदेहजो वायुरायामस्तन्निरोधनमि"ति ।

दाल्भ्यपरिशिष्टे—

"ब्रह्मयज्ञो जपो होमो देवर्षिपितृकर्म च ।
अनोङ्कृत्य कृतं सर्वं न भवेत् सिद्धिकारकम्" ॥

शाट्यायनोऽपि—

"दानयज्ञतपः स्वाध्यायजपध्यानसन्ध्योपासनप्राणायामहोम-दैवपित्र्यमन्त्रोच्चारणब्रह्मारम्भादीनि प्रणवमुच्चार्य प्रवर्तयेदि"ति ।

---

(१) ११।६—८ ।

अतश्च मन्त्रमात्रोच्चारणे आदावोंकारः कार्य इति सर्वानुक्रम-सूत्रभाष्ये ।

(१) ( केचित्तु प्रवर्तयेदिति वचनात्प्रारम्भे एव युक्तः ।

तथा च छन्दोगपरिशिष्टे कात्यायनः—

"नोंकुर्याद्धोममन्त्राणां पृथगादिषु कुत्रचित् ।
अन्येषां च विकृष्टानां कालेनाचमनादिना" इति ।

अस्यार्थः—'गोभिलगृह्यप्रसिद्धषडाहुतिविंशत्याहुतिमन्त्रेषु प्रतिमन्त्रमादौ न ओंकारप्रयोगं क्वचिदपि कुर्यात् किन्तु प्रथममेव । अन्येषां जपाद्यर्थानां रुद्राध्यायादीनां मध्ये अगायत्ये सति आचमनादिना कालेन ओंकारेण सह व्यवधाने जाते न आचमनानन्तरं पठ्यमानस्य मन्त्रस्य आदावोंकारप्रयोगः कर्तव्यः । होममन्त्रेष्वेवं व्यवधाने ओङ्कारः कर्तव्य एव' इति नारायणवृत्तिकृता प्रतिपादितः । अतएव शाखान्तरीया न कुर्वन्तीत्याहुः ।)

पारस्करगृह्यभाष्ये हरिहरस्तु अन्येषां चाविकृष्टानामिति पाठं धृत्वा अविकृष्टानामनन्तरितानां कालेनाचमनादिना चेति व्याख्यातवान् । ॐ कारस्त्रिमात्रो वक्तव्यः ।

मदनरत्ने व्यासः—

"त्रिमात्रस्तु प्रयोक्तव्यः कर्मारम्भेषु सर्वशः" ।

(२) (ओमित्यधिकृत्य तथैवापस्तम्बोक्तेश्च । अस्य पृथग्विधि-

---

( १ ) रेखान्तर्गतः पाठ आदर्शपुस्तकेषु नास्ति, परन्त्वपेक्षितः ।

( २ ) धनुश्चिह्नान्तर्गतः पाठोऽयमपेक्षितः सर्वादर्शपुस्तकेषु त्रुटितः प्रतिभाति ।

त्वात् मन्त्रेण सह न सन्धिः । पृथग्विधानेन सह सन्धिर्न भवती-त्युपपादितं "त्रिषिमान्" इत्यादिकात्तीयसूत्रे [ ३।३।५ ] कर्कोपाध्यायैः । अध्याहारस्य तु लौकिकत्वात् मन्त्रेण सह सन्ध्यभाव इत्यपि प्रतिपादितं "पशुं पूर्वं समनक्ति" इत्यधिकृत्य "सन्त) इति प्रतिमन्त्रमि"ति सूत्रे ( का० श्रौ० ६।४।२ ) कर्कोपाध्यायैः । इति सर्वत्र कर्मारम्भादौ सङ्कल्पादिपरि-भाषा उक्ताः ।

ततः सायंसन्ध्योत्तरं पत्न्या सहाग्नेः पश्चादुपविश्याचम्य प्रा-णानायम्य देशकालौ सङ्कीर्त्य अनिरुक्तपरमेश्वरप्रीत्यर्थं सायमौपा-सनहोममहं करिष्ये ।

तत्राग्नये स्वाहा प्रजापतये स्वाहेति द्वयोर्मन्त्रयोः प्रायोयुग ऋषयः गायत्र्यनुष्टुभौ छन्दसी अग्निप्रजापती देवते सायंहोमे विनियोगः ।

तत्राग्निं प्रजापतिं दध्ना तंडुलैरक्षतैर्वा अहं यक्ष्ये ।

तत उत्तरतोऽग्नेः पात्रोपकल्पनम् । उपयमनकुशाः समिधस्तिस्र मणिकोदकं होमद्रव्यं चेति । उपयमनकुशान् गृहीत्वा तिष्ठ समिधः प्रक्षेपः । उदकेनाग्निपर्युक्षणम् । नलिकयाग्नेः प्रदी करणं दक्षिणजानुनिपातः । हृदि सोपग्रहहस्तं निधाय दक्षिण पाणिना होमः ।

ॐअग्नये स्वाहा । इदमग्नये न मम । संस्रवरक्षणम् ।

ॐप्रजापतये स्वाहा । इदं प्रजापतये न मम । संस्रवरक्षणम्

दधितंडुलैरक्षतैर्वाऽन्यतमेन द्रव्येण स्वेन हस्तेन होमः । द

चेत्तदा स्रुवेण । स्त्रीगर्भकामा चेत्तदा सायंप्रातः पूर्वाहुतिं पत्न्येव जुहुयात् ।

"ॐ पुमाꣳसौ मित्रावरुणौ पुमाꣳसावश्विनावुभौ ।

पुमानिन्द्रश्च सूर्य्यश्च पुमाꣳसंवर्त्ततां मयि पुनः स्वाहे"ति ।

अनेन मन्त्रेण हुत्वा इदं मित्रावरुणाभ्यामिन्द्राय सूर्याय न ममेति त्यागो यजमानस्य । उत्तरामाहुतिं यजमान एव जुहोति । संस्रवप्राशनम् । पत्नीकर्तृकहोमशेषस्य पत्न्येव प्राशनं करोति दधिपक्षे तण्डुलपक्षे च शेषप्राशनम् । अन्य(अक्षत)पक्षे त्वभावः । नियत(अनदनीय)त्वादिति भर्तृयज्ञ इति गदाधरभाष्ये उक्तम् ।

तत ऊर्ध्वजानुः कृताञ्जलिरग्न्यभिमुखो जपेत् ।

समास्त्वेति नव ऋचस्याग्निर्ऋषिः त्रिष्टुप्छन्दः अग्निर्देवता अग्निस्तुतौ जपे विनियोगः । (१)नवऋचो जपेत्सायमुपस्थान इति जयरामभाष्ये ।

---

( १ ) सस्वरं जपः । ॐ समास्त्वाग्नऽऋतवो वर्द्धयन्तु संवत्सराऽऋषयो यानि सत्या ॥ सन्दिव्येन दीदिहि रोचनेन विश्वाऽआभाहि प्रदिशश्चतस्रः ॥ १ ॥

सञ्चेद्ध्यस्वाग्ने प्र च बोधयैनमुच्चतिष्ठ महते सौभगाय ॥ मा च रिषदुपसत्ता तेऽअग्ने ब्रह्माणस्ते यशसः सन्तु मान्ये ॥ २ ॥

त्वामग्ने वृणते ब्राह्मणाऽ इमे शिवोऽअग्ने संवरणे भवानः ॥ सपत्नहा नोऽअभिमातिजिच्च स्वे गये जागृह्यप्रयुच्छन् ॥ ३ ॥

इहैवाग्ने ऽअधिधारया रयिम्मा त्वा निक्रन्पूर्वचितो निकारिणः ॥ क्षत्रमग्ने सुयममस्तु तुभ्यमुपसत्ता वर्द्धतान्ते अनिष्टृतः ॥ ४ ॥

नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये ।
नम आहवनीयाय महावेद्यै नमो नमः ॥
नमः सभ्यावसथ्याभ्यां नमस्ते परमात्मने ।
एभिर्भवति पञ्चाग्नेर्विधिवत्समुपासनम् ॥ (१) चतुर्भिश्च०
अश्वत्थो यः शमीगर्भस्तस्य गर्भस्य यो रिपुः ।

---

क्षत्रेणाग्ने स्वायुः सᳬं रभस्व मित्रेणाग्ने मित्रधेये यतस्व ॥ स
जातानाम्मद्ध्यमस्त्थाऽएधि राज्ञामग्ने विहव्यो दीदिहीह ॥ ५ ॥

अति निहो अति स्रिधोऽत्यचित्तिमत्यरातिमग्ने ॥ विश्वा ह्यग्ने
दुरिता सहस्वाथास्मभ्यᳬं सहवीराᳬं रयिन्दाः ॥ ६ ॥

अनाधृष्यो जातवेदाऽअनिष्टृतो विराडग्ने क्षत्रभृद्दीदिहीह ॥
विश्वा आशाः प्रमुञ्चन्मानुषीर्भियः शिवेभिरद्य परिपाहि नो
वृधे ॥ ७ ॥

बृहस्पते सवितर्बोधयैनᳬं सᳬं शितञ्चित्सन्तराᳬं सᳬं शिशा
धि ॥ वर्धयैनम्महते सौभगाय विश्वऽएनमनुमदन्तु देवाः ॥ ८ ॥

अमुत्र भूयादध यद्यमस्य बृहस्पतेऽअभिशस्तेरमुञ्चः ॥ प्रत्यौहता
मश्विना मृत्युमस्माद्देवानामग्ने भिषजा शचीभिः ॥ ९ ॥

( १ ) पूर्वं १९८ पत्रे टिप्पण्यां द्रष्टव्यः । अस्यार्थे श्रुतिः—'तदेतद
ज्ञस्यायातयाम ओश्रावयास्तु श्रौषड्यज ये यजामहे वौषडिति ता
सां वा एतासां पञ्चानां व्याहृतीनाᳬं सप्तदशाक्षराण्यो श्रावयेति
चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति प
ञ्चाक्षरं द्व्यक्षरो वषट्कारः स एष सप्तदशः प्रजापतिरधिदैवतं चा
ध्यात्मं च प्रतिष्ठितः स यो हैवमेतᳬं सप्तदशं प्रजापतिमधिदैवतं चा
ध्यात्मं च प्रतिष्ठितं वेद प्रतितिष्ठति प्रजया पशुभिरस्मिंल्लोकेऽमृत
त्वेनामुष्मिन्नि' ( श० ब्रा० १२।३।३।४) ति ।

रिपुगर्भस्य यो गर्भस्तस्मै यज्ञात्मने नमः(१) ॥

(२)काले वर्षतु० (३)सर्वे० (४)यस्य स्मृत्या० (५)प्रमादात्० कायेन०(६) ।

अनेन सायंहोमाख्येन कर्मणा श्री भगवान् यज्ञरूपी परमेश्वरः प्रीयताम् । प्रणम्य भस्मवन्दनम् । इति सायंहोमः ।

---

(१) शमीगर्भस्य यो गर्भस्तस्य गर्भस्य यो रिपुः ।
रिपुगर्भस्य यो (भर्ता) गर्भः स मे विष्णुः प्रसीदतु" इत्यनुस्मृति (३१)पाठः । अस्यार्थः—शम्याः शमीवृक्षस्य गर्भोन्तःसारस्तस्य गर्भोऽग्निस्तन्मथनेनोद्भूयमानत्वात्, तस्याग्ने रिपुर्जलं तद्गर्भो लक्ष्मीस्तस्याः सागरमथनेन जलजात्वात् तस्याः भर्तेत्यादि । शमीगर्भपदेन अश्वत्थ इत्यपि केचित् तदपि सुवचनं अश्वत्थस्यापि वह्नियोनित्वात् ।

(२) काले वर्षतु पर्जन्यः पृथिवी सस्यशालिनी ।
देशोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः ।

(३) सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखमाप्नुयात ।

(४) यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ।

(५) प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ।

(६) कायेन वाचा मनसेन्द्रियैर्वा बुध्यात्मना वाऽनुसृतस्वभावात ।
करोमि (ति) यद्यत्सकलं परस्मै नारायणायेति समर्प(येत्तत्)यामि ।

( अथ प्रातर्होमे विशेषः । )

अथ प्रातर्होमे विशेषः । उषःकाले स्नानं कृत्वा अग्ने
प्रादुष्करणम् । तदुक्तं कात्यायनेन—

"सूर्ये (ऽस्त) (ऽन्त) तु शैलमप्राप्ते षट्त्रिंशद्भिरिहाङ्गुलैः ।
प्रादुष्करणमग्नीनां प्रातर्भासा(श्च)मदर्शने" ॥ (का०स्मृ०१।१
प्रकाशकरणमित्यर्थः । ततो मणिकोदकं कुर्यात् ।

ॐ आपो रेवतीः क्षयथा हि० । आपो हि ष्ठेति तिसृभिरिति
(१) अनेन मणिकपूरणम् ।

ततोऽनुदिते प्राणानायम्य देशकालौ सङ्कीर्त्य अनिरुक्तपरमेश्वर
प्रीत्यर्थं प्रातरौपासनहोममहं करिष्ये ।

तत्र सूर्याय स्वाहा प्रजापतये स्वाहेति द्वयोर्मन्त्रयोः प्रायोमेध
ऋषयः गायत्रीत्रिष्टुभौ छन्दसी सूर्यप्रजाप(ती)तिदेवते प्रातर्हो
विनियोगः । तत्र सूर्यं प्रजापतिं अमुकद्रव्यैरहं यक्ष्ये ।

उपयमनकुशादानादिपर्युक्षणान्तं पूर्ववत् । ततो होमः ।
ॐ सूर्याय स्वाहा । इदं सूर्याय न मम । ॐ प्रजापतये स्वाहा । इद
प्रजापतये न मम । विभ्राडित्यनुवाकं जपेत् । ऋष्यादिस्मरणम् ।
विभ्राड्बृहत् विभ्राड्सौर्यं उदुत्यं तिस्रः प्रस्कण्वः प्रतीकचोदि
तानां ब्रह्मस्वयंभुरानोऽगस्त्यो यदद्य श्रुतकक्षसुतंकक्षौ तरणि
प्रस्कण्वस्तत्सूर्यस्य द्वयोः कुत्सो बण्महां द्वयोर्जमदग्निः श्रायन्त
इव नृमेधोऽद्या देवाः कुत्स आकृष्णेन हिरण्यस्तूप आङ्गिरसः

(१) स्मा० १६७ पत्रे टिप्पण्यां द्रष्टव्यः ।

विभ्राट् जगती उदुत्यं तिस्रो गायत्र्यस्तंप्रत्नथा जगती अयं वेन-स्तिस्रस्त्रिष्टुभो यदद्य द्वयोर्गायत्र्यो तत्सूर्यस्य द्वे त्रिष्टुभौ वण्महां द्वे बृहतीसतोबृहत्यौ श्रायन्त इव बृहती अद्या देवा द्वे त्रिष्टुभौ सर्वासां सविता देवता अग्निस्तुतौ जपे (१) विनियोगः । शेषं पूर्ववत् ।

इति प्रातर्होमः ।

---

(१) सस्वरं जपः । हरिः ॐ विभ्राड्बृहत्पिबतु सोम्म्यम्मद्व्वायुर्द्दधद्यज्ञपतावविह्रुतम् ॥ व्वातजूतो योऽ अभिरक्षति त्मना प्रजाः पुपोष पुरुधा व्विराजति ॥ १ ॥ उदु त्यञ्जातवेदसन्देवं वहन्ति केतवः ॥ दृशे विश्वाय सूर्य्यम् ॥ २ ॥ येना पावक चक्षसा भुरण्यन्तञ्जनाँ २॥ ऽअनु ॥ त्वं व्वरुण पश्यसि ॥३॥ दैव्व्यावद्ध्वर्य्यू ऽआगतꣳ रथेन सूर्य्यत्वचा ॥ मद्ध्वा यज्ञꣳ समञ्जाथे॥४॥तम्प्रत्नथा पूर्व्वथा विश्वथेमथा ज्येष्ठतातिम्बर्हिषदꣳ स्वर्विदम्॥ प्रतीचीनं व्वृजनन्दोहसे धुनिमाशुञ्जयन्तमनु यासु वर्द्धसे ॥५॥ अयं व्वेनश्चोदयत्पृश्निगर्भा ज्ज्योतिर्ज्जरायूरजसो व्विमाने ॥ इममपाꣳसङ्गमे सूर्य्यस्य शिशुन्न व्विप्रा मतिभी रिहन्ति ॥ ६ ॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्य व्वरुणस्याग्नेः ॥ आ प्प्राद्यावापृथिवीऽअन्तरिक्षꣳसूर्य्यऽआत्मा जगतस्तस्थुषश्च ॥ ७ ॥ आ नऽइडाभिर्व्विदथे सुशस्ति विश्वानरः सविता देवऽएतु ॥ अपि यथा युवानो मत्सथा नो व्विश्वञ्जगदभिपित्वे मनीषा ॥८॥ यदद्य कच्च व्वृत्रहन्नुदगाऽअभि सूर्य ॥ सर्व्वन्तदिन्द्र ते व्वशे ॥ ९ ॥ तरणिर्व्विश्वदर्शतो ज्ज्योतिष्कृदसि सूर्य ॥ व्विश्वमाभासि रोचनम् ॥१०॥ तत्सूर्य्यस्य देवत्वन्तन्महित्वम्मद्ध्याकर्त्तोर्विततꣳ सञ्जभार॥ यदेदयुक्त हरितः सधस्थादाद्रात्री व्वासस्तनुते सिमस्मै ॥ ११ ॥ तन्मित्रस्य व्वरुणस्याभिचक्षे सूर्य्यो रूपङ्कृणुते द्योरुपस्थे ॥ अनन्तमन्न्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सम्भरन्ति ॥ १२ ॥ वण्म-

अथ प्रातर्होमे अभ्रेणाच्छादिते अनुदयभ्रान्ते सूर्योदिते हो
कृते तदा न दोषो न प्रायश्चित्तम् । सायं होमकालं ज्ञात्वा हो
कृते सूर्यो यदि दृश्यते तदा पुनः सन्ध्याकाले जाते होमं कुर्यात् ।
ततोऽग्निमपरेण प्राङ्मुखस्तिष्ठन् (१) 'भवतन्नः समनसावि'ति मन्त्रे
णाग्निमुपतिष्ठते पुनः सायंहोमं(२) कुर्यात् ।

---

हाँ २ ॥ असि सूर्य वडादित्य महाँ२॥ असि । महस्ते सतो महिमा प
स्यतेऽद्धादेव महाँ२॥ असि ॥१३॥ बट्सूर्य्य श्रवसा महाँ२ऽअसि सत्र
देव महाँ२॥असि ॥ मन्हा देवानामसुर्य्यः पुरोहितो विभुज्ज्योति
दाभ्यम् ॥ १२ ॥ श्रायन्त इव सूर्य्यं विश्वेदिन्द्रस्य भक्षत ॥ वस
नि जाते जनमानऽओजसा प्रति भागन्नदीधिम ॥ १५ ॥ अद्या दे
ऽउदिता सूर्य्यस्य निरꣳहसः पिपृतानिरवद्यात् ॥ तन्नो मित्रो व
रुणो मामहन्तामदितिः सिन्धुः पृथिवीऽउत द्यौः ॥ १६ ॥ आ कृष्णेन
रजसा वर्त्तमानो निवेशयन्नमृतम्मर्त्यञ्च ॥ हिरण्ययेन सविता र
थेना देवो याति भुवनानि पश्यन् ॥१७॥ (शु० य० सं० ३३।३०-४३

(१) ॐ भवतन्नः समनसौ सचेतसावरेपसौ । मा यज्ञꣳ हिꣳ
सिष्टम्मा यज्ञपतिञ्जातवेदसौ शिवौ भवतमद्य नः ( शु० य० ५। ३
१२। ६० )

( २ ) अत्र गङ्गाधरोक्ताः कारिकाः—

उद्धृत्याग्निं पचेदन्नं वारिणा मणिकस्य तु ॥
पादप्रक्षालनं कृत्वा ब्राह्मणानुपवेश्य च ॥
प्राणायामत्रयं कृत्वा कालज्ञानं तथैव च ।
गोत्रं च पितृनामानि श्राद्धसङ्कल्पमेव च ॥
मातृपूजा ततः श्राद्धं संध्योपासनमेव च ॥
अपरेणोपविश्याग्नेः पत्न्या सार्द्धं शुचिः सुधीः ॥
होमसङ्कल्पनं कृत्वा ऋष्यादिस्मरणं ततः ॥

तदुक्तं गृह्यकारिकायाम्—

स्वाध्यायोऽप्यविकल्पकस्त्वहरहः कुर्यादिदं संयतः
प्रातः स्नानविधिं विधाय हवनं दृश्यांशुमद्वर्जितम्।
सायं लोहितवर्णकं दिशि जलाधीशस्य यावद्भवे—
द्वा षड्घटिकावधिर्हुतविधिर्गौणोऽपि मुख्येऽसति॥
आ सायन्तनहोमतो हुतविधिः प्रातस्तनः संभवे—
त्वा प्रातस्तनकालतो मुनिजनाः सायन्तनस्याब्रुवन्।
पक्षादिष्वपि गौण एष विहितः सर्वेषु कर्मस्वयं—
कृत्वा भेषजमत्र कर्मविहितं कार्यं स्वकालात् पुरा॥
रजोनिहारैरथवाऽभ्रधूमैर्वृक्षादिभिर्वाऽन्तरिते दिनेशे।
उद्दिश्य सन्ध्याहवनं विधेयं न लुप्यते तत्र हुतं न दोषः॥
सन्ध्यादिने दिनकरेऽतिघनैः सकृष्णैः
सर्वासु दिक्ष्वपि तदस्तमनं च दृष्ट्वा।
होमे कृते घनचयापगमो यदि स्याद्
भास्वद्दिशस्तु नियतः पुनरेव काले॥
सन्ध्यादिकर्म कुरुते "भवतन्न" मन्त्रे—
णोपस्थितिर्हुतविधिं स पुनर्विधाय।
श्रौतेऽपि तद्विहरणे खलु शंस्यवह्ने—
रौपस्थिको हुतविधिः पुनरत्र कार्यः॥

---

देवतानामभिध्यानं पात्रासादनमेव च।
कुशाऽऽदानं समित्क्षेपः पर्युक्ष्याग्निं च वाग्यतः॥
प्रदीप्तेऽग्नौ भवेद्धोमो नमस्कृत्य जपेदिति॥

तत्र होमलोपे त्वेकतन्त्रेण सायंप्रातर्होमं कुर्यात् । बहुलोपेऽप्येवम् ।

( अथ पक्षहोमविधिः )

अथ पक्षहोमविधिः । तत्र यजमानस्यायाचितत्वेनार्थापगमे चौरराष्ट्रभ्रंशे ( आमयादिनिमित्ते रोगार्तावध्वगमने ) धनाभावे गुरुगृहवासे अन्यास्वपि भयाद्यापत्सु होमानां समासो यथा—( तद्यथा ) प्रतिपदि सायङ्काले उपयमनकुशादानादिपर्युक्षणान्तं कृत्वा आहुतिपरिमाणं होमद्रव्यं ( पात्रद्वये ) प्रतिपात्रं चतुर्दशवारं गृहीत्वा होमकाले प्रथमपात्रस्थानग्नये स्वाहेति जुहुयात् । ततो द्वितीयपात्रस्थान् प्रजापतये स्वाहेति जुहोति । एवं द्वितीयायां प्रातः पर्युक्षणान्तं कृत्वा पूर्ववत् पात्रद्वये तण्डुलान् कृत्वा सूर्याय स्वाहेति प्रथमपात्रस्थान् हुत्वा प्रजापतये स्वाहेति द्वितीयपात्रस्थांस्तण्डुलान् जुहुयात् । प्रयोगरत्ने हरिहरमिश्रैस्तु सायंप्रातर्होमो लिखितः । स चैवं पर्युक्षणान्तं कृत्वाऽग्नये स्वाहेति हुत्वा तथैव सूर्याय स्वाहेति हुत्वा आहुतिद्वयपर्याप्तं होमद्रव्यमादाय प्रजापतये स्वाहेति सकृज्जुहुयात् । पक्षमध्ये वा आपत्तावागामिचतुर्दशीसायंकालीनहोमान्तान् शेषान् होमान् सायं समस्येत् पर्वप्रातर्होमान्तांश्च प्रातः शेषान् होमान् सायं समस्येत् । सर्वथा पर्वसायंहोमः प्रतिपत्प्रातर्होमश्च पृथगेव होतव्यः । तत्र पूर्ववदग्निमभिरक्षेत् ।

हरिहरस्तु—'पक्षहोमानन्तरं 'अयन्ते योनि' रि

मन्त्रेणाग्निं समारोपयेत् । अथ पौर्णमास्याममावास्यायां वा प्राप्तायां प्रातररण्योरग्निं मथित्वा कुण्डे निधायावसरप्राप्तं वैश्वदेवादिकं कर्म विधाय सायङ्काले सायंहोमं प्रातःकाले प्रातर्होमं हुत्वा पुनः पक्षादिहोमं कुर्यात्' ( इत्याह ) ।

काठके—

"एवमेवोत्तरत्राह्नि प्रातर्होमान् (१)समस्य तु ।

---

( १ ) अत्र संस्काररत्नमालायां प्रजापतिः—

सायंप्रातस्तनौ होमावुभौ सायं समस्य तु ।
आपन्नो जुहुयात्तत्र समिदेकाऽथवा द्वयम् ॥
सायंहोमस्य मुख्यत्वात्तदीयं तन्त्रमिष्यते ।
चतस्र आहुतीः कुर्यात्तत्र द्वे सायमाहुती ॥
द्वे प्रातराहुती सायंहोमे चेका समिद्यदि ।
समित्कृता द्वितीया चेत्सा भवेत्प्रातराहुतौ ॥
द्विः सायंहोमवन्मृज्याद्द्विः प्रातर्होमवत्स्रुचम् ।
उपस्थानं सकृत्कार्यं शेषं प्रकृतिवद्भवेत् ॥
केचिद्द्वे आहुती हुत्वा संविश्यैव निमील्य वा ।
विच्छिद्यैतावता होमौ कुर्याद्द्वे आहुती ततः ॥
गुर्वापदि समस्यन्ते प्रातः सर्वे कदाचन ।

( त्रि० मं० २।१८६-१६४ )

यावन्तोऽत्र समस्यन्ते सर्वे सायमुपक्रमाः ॥
प्रातः कालापवर्गाश्च न तु प्रातरुपक्रमाः । इति ।

( त्रि० मं० २।२०५ )

पक्षहोमे बौधायनः—

"अथाऽऽपद्यग्निहोत्राणां समासं राष्ट्रविभ्रमे व्याधिपीडायामध्वगमनप्रसङ्गे गुरुकुलवासापेक्षायां मातृपितृकलत्रपुत्राद्यत्यये बल-

जुहोत्यौपवसथ्याहप्रातर्होमात्रधीनः सकृत् ॥
समारोपविधानेन समारोपयतेऽनलान् ।
ये धार्यन्तेऽथवा धार्यान् धारयन्त्येव पूर्ववदि"ति ॥
( त्रि० मं० २।१७२–१७४ )

---

वतो निरोधादौ देशकालाद्यनुपपत्तौ चात्यन्तापत्सु" इति ।

अग्निहोत्रिणां = अग्निहोत्रसम्बन्धिनां होमानाम् । राष्ट्रविभ्रमो राष्ट्रक्षोभः । विशिष्ट आधिर्व्याधिर्मानसं दुखं, पीडा बाह्यं दुःखम् । अत्ययो = नाशः । बलवतो निरोधो = बलवत्कर्तृको निरोधः । बलवति विरोधाविति पाठे बलवत्वविशेषणं निरोधादीनां द्रष्टव्यम् ।

मरीचिः—

शरीरापद्भवेद्यत्र भयार्तश्च प्रजायते ।
यथाऽन्यास्वपि चाऽऽपत्सु पक्षहोमो विधीयते ॥
हुतेषु पक्षहोमेषु मध्ये तस्मान्निवर्तते ।
होमं पुनः प्रकुर्याच्चेन्न चासौ दोषकृद्भवेत् ।

चेदित्यनेन विकल्पः श्रूयते । पक्षहोमग्रहणं शेषहोमोपलक्षणमित्याचाररत्ने ।

मण्डनस्मृत्यर्थसारौ—

आमयाव्यार्तिमानापद्गतो वाऽध्वगतोऽपि वा ।
राष्ट्र(भ्रंशे)भङ्गे धनाभावे गुरुगेहे वसन्नपि ॥
अन्येष्वेवंप्रकारेषु निमित्तेष्वागतेषु च ।
समासमग्निहोत्राणां यथासम्भवमाचरेत् ॥
निमित्तानामिहैतेषां निर्दिश्यैकं यदुच्यते ।
तत्सर्वेषु निमित्तेषु जानीयात्प्रतिपादितम् ।
पक्षहोमानशेषान्वा शेषहोमानथापि वा ॥
( त्रि० मं० २।१६६–१६८ ) इति ॥

एतदापद्विषयम्। अग्नौ समारूढे सति वैश्वदेवः कथं भवेत्।
तदुक्तं (अत्रोक्तं) दामोदरनिबन्धे—

"पक्षहोमे कृते वह्नौ समारूढे कथंचन।
पञ्चयज्ञविधानं तु लौकिकेऽग्नौ विधीयते"॥

यज्ञपार्श्वे—

"गृहीत्वाग्निं समारोप्य यः परान्नं निषेवते।
अभोज्यान्नं गृहस्थोऽसौ वेदवादिषु गर्हितः"॥

अनापदि पक्षहोमे प्रायश्चित्तं देवयाज्ञिके—

"अनातुरोऽप्रवासी च निश्चिन्तो निरुपद्रवः॥
पक्षहोमं तु यः कुर्यात् स चरेत् पतितव्रतम्"।

---

संग्रहे तु—

पक्षादौ पक्षहोमः स्यात्समस्यो मध्यमो भवेत्।
सायंप्रातः पृथक् कुर्यादेकस्मिन् वा निमित्ततः॥
प्रतिपत्सायमारभ्य द्वितीया प्रातरेव च।
समस्य पूर्ववद्धोम उपस्थानं समित्पृथगिति॥

आलस्यादिना समस्यहोमे दोषमाह गोपालः—

नैतज्जामितया कार्यं न रागान्न च लोभतः।
नैतच्छक्ति दधानस्तु कुर्याच्छ्रद्धालुरापदि।
अनापद्याचरन्निष्ट्या तन्तुमत्या यजेत सः॥

जामिता=ऽऽलस्यम्। शक्तिमाञ्जामितया रागेण लोभेन वा नैतत्समस्य होमविधिमनुतिष्ठेत्। आपदि त्वनुतिष्ठेदेव। अनापदि यद्यनुतिष्ठेत्तदा तन्तुमत्येष्ट्या यजेदित्यर्थः। अत्र तन्तुमतीष्टिस्थने-तान्तुमतः स्थालीपाकः। "य आहिताग्नेः पुरोडाशास्तेऽनाहिताग्नेश्चरव" इति शास्त्रान्तरात्।

अत्यन्तापत्तौ—

"एवमापद्गतः पक्षे पक्षे चैवं समाचरेत् ।
तृतीयेऽनन्तरे पक्षे समासं न समाचरेत् ॥
तावता नापगच्छेच्चेदापत्पक्षे तृतीयके ॥
कृच्छ्रेणापि विनिर्वर्त्य तत्र होमान् दिने दिने ।
पक्षान्तरे पुनः कामं पक्षहोमादिमाचरेत् ॥
कठैः पक्षद्वयं त्वेव पक्षहोमो नियम्यते ।
आपच्चेदनुवर्तेत दीर्घकालं कदाचन ।
(१)यावज्जीवमविच्छिन्नान्पक्षहोमान् समाचरेत् ॥
आपदेवावधिस्तत्र न पक्षगणनावधिः" ।

( त्रि० मं० २।१८४–१८८ ) ।

अथ पक्षहोमः प्रयोगः । तत्रापत्सम्भावनायां प्रतिपदि सायं देशकालसङ्कीर्तनान्ते अद्याद्यागामिपर्वपूर्वदिने सायंहोमान्तं सायं होमान् समस्याहं करिष्ये । इति सङ्कल्प्य प्रतिपदादिपूर्वपर्वदिनान्तं गणनया पात्रान्तरे होमद्रव्यं गृहीत्वा पूर्ववत् सायंहोमः कर्तव्यः । एवं द्वितीयायां प्रातर्देशकालसङ्कीर्तनान्ते अद्याद्यागामिपर्वप्रातर्हो-

---

( १ ) अत्र चन्द्रिकायां—"यदि पक्षहोमेन पक्षत्रयमतीयात्पुनराधान" मित्युक्तं तदनापत्तिपरम् । विशेषः स्मृतिभास्करे—

सर्वथोपवसथ्याहे सायं होमः पृथग् भवेत् ।
तथैव यजनीयेऽह्नि प्रातर्होमो भवेत्पृथक् ॥

मण्डनः—पर्वोपवासशून्यं चेत्प्राप्तं केनापि हेतुना ।
तदा तत्सायंहोमोऽपि पूर्वैः सहसमस्यते ॥ इति ।

मान्ते प्रातर्होमान समस्याहं करिष्ये। इति सङ्कल्प्य द्वितीयादिपर्वदिनान्तगणनया द्रव्यं गृहीत्वा पूर्ववत् प्रातर्होमः कर्तव्यः इत्येकः पक्षः ।

पक्षान्तरे प्रातर्होमासम्भावनायां तु प्रतिपदि सायमेव देशकालसङ्कीर्तनान्ते अद्याद्यागामि पर्वप्रातर्होमान्ते सायंप्रातर्होमान् समस्याहं करिष्ये । इति सङ्कल्प्य प्रतिपदि सायमादि पर्व प्रातरन्तं सायङ्कालगणनया होमद्रव्यं पूर्ववत्सायन्तनाहुतिं हुत्वा पुनस्तथैव गृहीत्वा सूर्यायेति हुत्वा आहुतिद्वयपर्याप्तं होमद्रव्यमादाय प्रजापतये स्वाहेति सकृज्जुहुयात् । एवं सायंप्रातः समस्ययोर्होमः ।

अथ प्रातरेवापदागमश्चेत् द्वितीयायां प्रातरेवाद्याद्यागामिपर्वप्रातरन्तं प्रातःसायंहोमान् समस्याहं करिष्ये । इति सङ्कल्प्य द्वितीयाप्रातरादि पर्वप्रातरन्तं प्रातःसायंकालगणनया द्रव्यं गृहीत्वा पूर्ववत्प्रातस्तनस्तन्त्रेण होमः कर्तव्यः । तत्राप्यादौ पूर्ववदादौ प्रातराहुतिः पश्चात् सायमाहुतिस्तन्त्रेणैवोत्तरा एवं यदैवापद्गमः पूर्वाह्णापराह्णादौ तदैवापन्निर्गमान्तं सायंप्रातर्होमाः कर्तव्याः । अथ यदा कश्चित्सायमेवाद्य श्वः प्रातर्होमेन समस्य सायंहोमं करिष्ये । इति सङ्कल्प्य पूर्ववत्सायंतनस्तंत्रेण होमः कर्तव्यः । कदाचिदापद्गुरुतश्चेत्पर्वणि व्रताद्यसम्भावना तदा पर्वसायंहोमोऽपि पूर्वैर्होमैः (सह) समस्य कर्तव्यः । एवमेवातिक्रान्तहोमेष्वपि देशकालसंकीर्तनान्ते अतिक्रान्तैतद्दिनाद्यवधिसायंप्रातर्होमानहं करिष्ये । इति संकल्प्य अतिक्रान्तसायंप्रातर्होमगणनया होमद्रव्यं गृहीत्वा पूर्ववज्जुहुयात् ।

इति स्मार्तोल्लासे सायंप्रातर्होमविधिनिर्णयः समाप्तः ।

## ( आशौचनिर्णयः । )

अथाशौचनिर्णयः । व्यासः—

"सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वापि त्यजगच्छेदधो द्विजः" ।।

कर्मप्रदीपे—

"सूतकादौ समुत्पन्ने स्मार्तकर्मणि (न) किंचन ।
अनारब्धे भवेदेतत्प्रारब्धे नास्ति सूतकम्" ।।

अपवादान्तरमाह याज्ञवल्क्यः—

"वैतानोपासनाः कार्याः क्रियाश्च श्रुतिचोदनात्"(१) ।
तत्र त्यागमात्रे स्नानोत्तरं स्वस्य कर्तृत्वम् ।

"श्रौते कर्मणि तत्कालं स्नातः शुद्धिमवाप्नुयादि"ति स्मृतेः । श्रौतं सर्वं स्वयं कार्यं स्मार्तं तु त्यागातिरिक्तेऽन्यस्यैव कर्तृत्वं त्यागमात्रे तु स्वस्य ।

"आशौचे वर्जयेत्सर्वं नित्यं नैमित्तिकादिकम् ।
अग्निहोत्रं विहायान्यत्स्मार्तं पौराणिकं तथा" ।।

जातूकर्ण्यः—

"सूतके तु समुत्पन्ने स्मार्तं कर्म कथं भवेत् ।
पिण्डयज्ञं चरुं होममसगोत्रेण कारयेत् ।।
स्मार्ताग्निः सूतके शावे स्वयं न जुहुयाद्द्विजः ।
श्रौताग्निस्तु सकृद्धुत्वा समाप्तौ वा स्वयं हुनेत्" ।।

---

(१) या० स्मृ० ३।१७।

पुलस्त्यः—

"सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत्सूतके वापि त्यजन्गच्छेदधो द्विजः" ॥
"सन्ध्यां पञ्चमहायज्ञान्नैत्यकं स्मृतिकर्म च ।
तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रियेति" जाबालिः ।

सन्ध्यायां तु विशेषो भरद्वाजोक्तेः—

"सूतके मृतके कुर्यात् प्राणायाममन्त्रकम् ।
तथा मार्जनमन्त्रांश्च मनसोच्चार्य मार्जयेत् ॥
गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदयेत् ।
मार्जनं तु न वा कुर्यादुपस्थानं न चैव हि" ॥

आश्वलायनः—

"आपन्नाश्चाशुचिः काले तिष्ठन्नपि जपेद्दश" ।
गायत्रीमिति शेषः । अग्निस्मृतावप्यर्घस्यावश्यकतोक्ता ।
"जलाभावे महामार्गे बन्धने त्वशुचावपि ।
उभयोः सन्ध्ययोः काले रजसा वार्घ्यमुत्सृजेदि"ति ॥

कात्यायनः—

"सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते ।
होमः श्रौते तु कर्तव्यः शुष्कान्नेनापि वा फलैरि"ति ॥
संध्याविधिस्तु पूर्वोक्तः ।

ब्रह्मपुराणे—

"पर्वहोमेषु पत्न्यादौ यागकाल उपस्थिते ।

शुष्कान्नेन फलैर्वापि यजेत च यथाक्रम"—

मित्याशौचाभाव उक्तः। चर्वा आर्द्रेण स्वयं होमः पञ्चयज्ञास्तु शुष्कान्नेनापि न कर्तव्याः।

"पञ्चयज्ञविधानं च न कुर्यान्मृत्युजन्मनोरि"ति—

जातूकर्ण्योक्तेः। स्मार्ते होमे त्वन्याभावे जबालोक्तिः-

"जन्महानौ वितानस्य कर्मत्यागो न विद्यते।

शालाग्नौ केवलो होमः कार्य एवान्यगोत्रजैरि"ति।

श्रीधरपद्धतौ—

"स्मार्ताग्निमात्मनोऽन्येषामभावे सूतकादिषु।

समारोप्य तदन्ते तु विहृत्य जुहुयात्स्वयम्।

अतीताहुतयः सर्वा हुनेन्निष्कृतिपूर्वकम्॥

घृतैश्चतुर्गृहीतैस्तु कुर्यात्तं निष्कृतिः सदा॥

न त्यजेत्सूतके वापि त्यजन्गच्छेदधो गतिम्"।

अयमेव सिद्धान्तः।

इति स्मार्तोल्लासे सूतके होमविधिः।



# अथ रजस्वलानिर्णयः ।

अथाधानमध्ये पत्नी रजस्वला तदा विशेषः ।

आधाने वर्तमाने असमाप्तौ पत्न्या रजोत्प(त्तौ)त्तिः सूतके वा मृतके जाते पञ्चदशदिने अशौचान्ते आभ्युदयिकादिसर्वं कार्यम् । मन्थने जाते सूतके मृतके रजोत्पत्तौ वा तदाग्निमुपसमाधानं अग्निधारणं शुद्धिपर्यन्तं कार्यम् । अधिकारे जाते सति ब्रह्मोपवेशनाद्याधानं सर्वं क्रियते । ब्रह्मोपवेशनसमाप्त्यनन्तरमेवाशौचाद्युत्पत्तौ आधानसमाप्तिं क्रियमाणः शुद्धौ सत्यां मणिकावधानं कार्यमिति पक्षः । परन्त्वाधाने क्रियमाणे पत्न्यारजोत्पत्तौ सूतके मृतके वा प्राप्ते ब्राह्मणतर्पणपूर्वकमाधानमावर्तते । तथा चोक्तम्—

"अर्वाग् ब्राह्मणतृप्तेश्चेदाधाने स्त्री रजस्वला ।
आवर्तते तदाधानं मातृपूजासमन्वितमि"ति ॥

कारिकायाम्—

"अर्वाक् पूर्णप्रदानाच्चेदाधाने स्त्री रजस्वला ।
तच्छुद्धौ पुनराधानं मातृपूजनपूर्वकम् ।
स्यातान्ते अरणिः सैव योनिः सैवोत्तरा तथा ।
आधानानन्तरं चेत्सा रजोयुक्ता (१) कथंचन ।

---

(१) बह्वीनां पत्नीनाममुख्याऽनालम्बुका चेत्तदा यागः कर्तव्य एव । ज्येष्ठा चेदनालम्बुका तदा न यागः कर्तव्यः । तदुक्तं हेमाद्रौ गौतमेन—"यजनीयेऽह्नि सम्प्राप्ते यस्य भार्या रजस्वला ।
यागं तत्र प्रकुर्वीत ज्येष्ठा चैन्नैवमाचरेत्" इति ।

मणिकादि न कर्तव्यं कुर्यादेकादशेऽहनी"ति ।
आधानपदार्थविपर्यासे पुनरावृत्तिर्नानादिष्टमिति । प्रथमाधाने

---

वशिष्ठोऽपि—

"बह्वीनामपि पत्नीनां ज्येष्ठाचेद्रजसाऽन्विता ।
नापरुध्य प्रकुर्वीत यजनं हि विचक्षणः" इति ।

कनिष्ठामपरुध्य यागः कर्तव्य इति त्वर्थात्सिद्धं भवति । अस्ति च पाद्मं वचनम्—

"बह्वीनामेकपत्नीनां कनिष्ठा रजसाऽन्विता ।
अपरुध्यापि कुर्वीत यजनं विधिपूर्वकम्" इति ।

ज्येष्ठातोऽन्याः सर्वा अपि कनिष्ठशब्देन ग्राह्याः । न त्वन्तिमैव । अत एव—

"बह्वीनामपि पत्नीनाममुख्या रजसन्विता ।
अपरुध्यापि कुर्वीत यजनं विधिपूर्वकम्" ॥

इति स्मृत्यन्तरेऽमुख्येत्युक्तम् ।

ज्येष्ठपत्न्या मुख्यत्वं तु पाद्म उक्तम्—

"ज्येष्ठा पत्नी तु मुख्या स्याद्यज्ञे दानेऽर्चने गृहे ।
तया कर्माणि कुर्वंस्तु यथोक्तफलभाग्भवेत्" ॥ इति ।

कौर्मेऽपि—

"ज्येष्ठपत्न्या विरहितं कृतं यत्तु जनाधिप ।
तत्सर्वं विफलं याति गजभुक्तकपित्थवत्" इति ।

वशिष्ठोऽपि—

"ज्येष्ठया सह कर्माणि कुर्याद्यत्नेन भूपते ।
तया सह कृतं कर्म सफलं जायते नृणाम्" इति ।

ज्येष्ठपत्न्या राहित्येन कर्मकरणे यो दोष उक्तः स तस्या विद्यमानत्वे द्रष्टव्यः । ज्येष्ठायां मृतायां विद्यमानासु या ज्येष्ठा सा मुख्यत्वेन

आभ्युदयिकमादौ कृत्वा ब्राह्मणतृप्तिपर्यन्तं पदार्थानां विपर्यासे नाशे वा पत्न्या रजोत्पत्तौ सूतके मृतके वा जाते आभ्युदयिकादि सर्वमाधानमावर्तते । ब्राह्मणतृप्तेरनन्तरं सूतकाद्यापत्तौ शुद्धयनन्तरं मणिकाधानादि सर्वं कार्यमिति ।

अथ यदि कृताधानो यजमानः प्रजार्थी वा कमार्थीचोद्वहेत्तत्रान्ये अरणी संपाद्य प्रातर्होमं विधाय दिवा विवाहं कृत्वा आचतुर्थीकर्मणो होमं त्यक्त्वा तदन्तेऽतिक्रान्तहोमद्रव्यं दत्वा पञ्चमेऽहनि पुनराधानं यथोक्तं कार्यमित्येकः पक्षः ।

प्रातर्होमं कृत्वा दिवा विवाहं संपाद्य सद्यः चतुर्थीकर्म च कृत्वा तद्दिन एवावसथ्याधानमिति द्वितीयः पक्षः ।

अत्र पक्षद्वयेऽपि पूर्वारण्योः स्फुटितयोरावसथ्ये दहनम् । अ-

---

इष्टव्या । एवं च विद्यमानज्येष्ठाव्यतिरिक्ताः पत्नीरपरुध्यपि यागः कर्तव्य इति सिद्धं भवति । एतेन बह्वीनां पत्नीनामेकाऽप्यृतुमती चेन्न यागः कार्य इति परास्तम् ।

एतच्च प्रथमप्रयोगव्यतिरिक्ते—

"प्रक्रान्तमग्निहोत्रादि कर्म यच्छ्रुतिचोदितम् ।
आर्तवाभिप्लुतां नारीं विहाय कुरुते द्विज"

इति कात्यायनवचने प्रक्रान्तमिति श्रवणात् ।

"ज्येष्ठा वाथ कनिष्ठा वा पत्नी यदि रजस्वला ।
प्रथमे चेत्प्रयोगे स्यान्नोपरोधस्तदा मतः"

इति स्मृत्यन्तरेऽभिधानाच्च । प्रक्रान्तमारब्धमेकवारमनुष्ठितमिति व्याख्यातारः । ये तु प्रारब्धं सङ्कल्पादिना प्रक्रान्तमित्यर्थं वदन्ति तन्मते सङ्कल्पोत्तरं प्रथमप्रयोगेऽप्यपरोध इति द्रष्टव्यम् ।

न्यारण्योराधानम् । पात्राणि तु तान्येव । यत्तु छन्दोगपरिशिष्टे—

"सदारो यः पुनर्दारान् कथंचित्कारणान्तरात् ।
य इच्छेदग्निमान् कर्तुं क होमोऽस्य विधीयते ॥
स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचन ।
न त्वाहिताग्नेः स्वं कर्म लौकिकेऽग्नौ विधीयते" ॥

इति पुनराधानाभाव इति प्रतिपादनं तच्छन्दोगविषयम् ।

अथारोपिताग्न्योररण्योर्नाशे एकस्या वा पुनराधानम् । असमारोपितयोस्त्वेकतरनाशे द्वितीयां छित्वा मन्थनम् । नष्टायाः प्रतिपत्तिरावसथ्ये दाहः । यदा पुनर्जन्तुभक्षणेन मन्थनेन वा मन्थनायोग्ये भवतस्तदान्ये अरणी गृहीत्वा दार्शपक्षादिकर्म निर्वर्त्य जीर्णमरणिद्वयं शकलीकृत्य तस्मिन्नग्नौ प्रज्वाल्य दक्षिणहस्तेन नूतनामुत्तरारणिं सव्यहस्तेनाधरारणिं गृहीत्वा प्रदीप्तेऽग्नौ धारयन्—

"ॐ उद्बुध्यस्वाग्ने प्रविशस्व योनिमन्यां देवयज्यायै वोढवे जातवेदः । अरण्योररणिमनुसंक्रमस्व जीर्णां तनुमजीर्णया निर्णुदस्व ।

(१)अयन्ते योनिर्ऋत्वियो" इत्येतौ मन्त्रौ जपित्वा मन्थनयन्त्रं निधाय पूर्णाहुतिवदाज्यं संस्कृत्य अनादिष्टहोमं कुर्यात् ।

## अथ पर्वनिर्णयः ।

अथ स्थालीपाककर्मोच्यते तदुपयोगी पर्वनिर्णयः ।

श्रीमन्तं परमानन्दं नत्वा कात्यायनस्य हि(कात्यायनं तथा)।

(१) य० सं० ३।१४।

कस्मिन् दिने याग इति निश्चयं वच्मि साम्प्रतम् ॥

तत्र पर्वप्रतिपदोः सम्पूर्णत्वे सन्देह एव नास्ति खण्डत्वे तु तत्रोपवासयागकालनिर्णयमाह । पौर्णमास्यां तु द्वेधा विभाग एव श्रुत्या उक्तः । "वसन्तो ग्रीष्मो वा० पूर्वाह्णो देवा अपराह्णः पितर" इति द्विधा विभागः ।

स्कन्दपुराणे—

"आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः ।
मध्याह्नस्तु तयोः सन्धिर्यदावर्तनमुच्यते ॥

अयं द्वेधा विभागः । लौगाक्षिः—

"पूर्वाह्णे वाथ मध्याह्ने यदि पर्व समाप्यते ।
उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते ॥
अपराह्णेऽथवा रात्रौ यदि पर्व समाप्यते ।
उपोष्य तस्मिन्नहनि श्वोभूते याग इष्यते" ॥

गोभिलः—

"आवर्त्तने यदा सन्धिः पर्वप्रतिपदोर्भवेत् ।
तदहर्याग इष्येत परतश्चेत् परेऽहनि" ॥

कात्यायनः—

"सन्धिश्चेत्संगवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः ।
सा पौर्णमासी विज्ञेया सद्यस्कालविधौ तिथिः" ॥

अत्र पूर्वापेक्षया यावती प्रतिपदा (दो) वृद्धिः क्षयो वा तदर्धं पर्वणि प्रक्षिप्य सन्धिनिर्णयः । तदाह कात्यायनः—

"परेऽह्न घटिका न्यूनास्तथैवाभ्यधिकाश्च याः ।

तदर्धं कृत्वा पूर्वस्मिन् ह्रासवृद्धी प्रकल्पयेत्"

लौगाक्षिः—

"तिथेः परस्या घटिकास्तु याः स्यु-
र्न्यूनास्तथैवाभ्यधिकाश्च तासाम् ॥
अर्द्धं वियोज्यं च तथा प्रयोज्यं
ह्रासे च वृद्धौ प्रथमे दिने तत्" ॥

दिनमानं तु त्रिंशद्घटिमितम् ३० तत्रोदाहरणम्—पर्व चतुर्दशघटिमितम् १४ प्रतिपदष्टादशघटि १८ तदा प्रतिपद्वृद्धेरर्धं घटिकाद्वयं पर्वान्ते प्रक्षिपन्ति । एवं पर्व सप्तदशघटि १७ प्रतिपत्त्रयोदशघटि १३ तदा प्रतिपत् ह्रासार्द्धं घटिद्वयं पर्वान्यूनयन्ति एवं ज्ञात्वा पूर्वोत्तरदिने यागः । तच्च यागकालो यथा कात्यायनः—

"पञ्चदश्याः परः पादः पक्षादेः प्रथमास्त्रयः ।
कालः पार्वणयागस्य अन्यथा तु न विद्यते" ॥

वृद्धशातातपः—

"पर्वणो यश्चतुर्थोऽश आद्याः प्रतिपदस्त्रयः ।
यागकालः स विज्ञेयः प्रातर्यु(रु)क्तो मनीषिभिः" ॥

अत्र प्रतिपच्चतुर्थांशे यागनिषेधस्तु [ अपराह्णसन्धिविषयः ]
तदुक्तं वृद्धशतातपेन—

"सन्धिर्यद्यपराह्णे स्याद्यागः प्रातः परेऽहनि ।
कुर्वाणः प्रतिपद्भागे चतुर्थेऽपि न दुष्यति" ॥

इति पौर्णमासीनिर्णयः ।

## अथामावास्यायां विशेषः ।

वाजसनेयिनाममासन्धिनिर्णये पिण्डपितृयज्ञकालविधाय(१)-कश्रुत्या त्रेधा विभागो वक्ष्यते । अत्र दिवसस्य त्रेधा-विभागः । "स वा अपराह्णे ददाती"ति श्रुतेः । अपराह्णशब्दस्तु तृतीयभागपरः । कात्यायनः—

"पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयेंऽशे नातिसन्ध्यासमीपतः(२) ॥
चतुर्दश्यष्टमे भागे क्षीणो भवति चन्द्रमाः ।
अमावास्याष्टमे भागे पुनः किल भवेदणुः(३) ॥
वर्द्धमानाममावास्यां लभेच्चेदपरेऽहनि ।
यामांस्त्रीनधिकान्वापि पितृयज्ञस्ततो भवेत्(४) ॥

कर्मप्रदीपे—

"यदा चतुर्दशीयामं तुरीयमनु(पूरयेत्)पूर्वकम् ।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते(५)" ॥

श्राद्धशब्देन पिण्डपितृयज्ञः पार्वणं चेति । अत्रामाविषये ह्रासवृद्धिसूक्ष्मविचारो गङ्गाधरकृते पर्वनिर्णये तथा मयूखे प्रोक्तः ।

---

(१) "पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितृणां तस्मादपराह्णे ददाती"ति ( श० ब्रा० २।४।२।८ ) श्रुतिः ।

(२) का० स्मृ० १६।१ ।

(३) का० स्मृ० १६। ५ ।

(४) का० स्मृ० १६ । १० ।

(५) क० प्र० १६।२ ।

तत्र वृद्ध्युदाहरणम् । यत्र चतुर्दशी२५ पर्व विंशति२० प्रतिपत् षोडश १६ अत्र पर्वणो घट्यादिमानं ५५ । अत्र वृद्धिरेका घटी १ ज्ञेया । तदर्द्धे पर्वणि योजिते जातं पर्व सार्द्धविंशति घटिमितं, दिनप्रमाणं त्रिंशद्घटिमितं तदाऽपराह्णे सन्धिर्जायते तेनोत्तरदिने यागः। क्षयोदाहरणं यथा यत्र पर्वषट्षष्ठिघटि ६६ प्रतिपच्चतुःषष्ठिः ६४, तदा प्रतिपत्क्षयो द्विघटिमितः२ तदर्द्धे पर्वविनियोजिते:जाते पर्व विंशति २० घटिमितं तदा मध्याह्ने सन्धिर्जायते तेन तस्मिन्दिने यागः। (१)पूर्वदिनेऽन्वाधानम् । (अत्र चन्द्रदर्शने निषिद्धयागः)(२)।

"अन्वाधानं चतुर्दश्यां परतः सोमदर्शनादि"ति निषेधात् ।

यस्मिन्देशेऽष्टादशघटीमितं दिनमानं बदरीचम्पाकाश्मीरकामरूपादौ श्रौतस्मार्तकर्मानुष्ठानदेशे सम्भवति ( तत्र ) चतुर्दश्यां पिण्डपितृयज्ञः, अमादिने यागः । इत्थं च त्रयोविंशत्यधिकदिनमानदेशे इदं न सम्भवतीति निश्चयः ।

कात्यायनश्च—

"यजनीयेऽह्नि सोमश्चेद्वारुण्यां दिशि दृश्यते ।
तत्र व्याहृतिभिर्हुत्वा दण्डं ( दानं ) दद्याद्द्विजातये" ॥

(३)शेषपर्वणीष्टौ माधवीये गार्ग्यः—

---

( १ ) "पूर्वदिनेऽन्वाधाना इत्यादि सुधिभि" रिति सर्वादर्शपुस्तकेषु पाठः ।

( २ ) इत ऊर्ध्वं "एवमुक्तमेतद्विषये वाक्यानो"त्यधिकः सर्वादर्शपुस्तकेषु पाठः ।

( ३ ) "शेषपर्वणोष्टौ विंशे माधवीये" इति सर्वत्र पाठः ।

"प्रतिपद्यप्रविष्टायां यदि त्विष्टिः समाप्यते ।
पुनः प्रणीय कृच्छ्रेष्टिः कर्तव्या यागवित्तमैः" ॥

एतच्च पञ्चदशशाखान्तर्गतबौधायनवाजसनेयिविषयं न माध्यन्दिनीयवाजसनेयिविषयम् । गदाधरभाष्येऽपि—पिण्डपितृयज्ञदिनात्परदिने यागः कार्यः । "पूर्वेद्युः पितृभ्यो निष्क्रीय प्रातर्देवेभ्यः प्रतनुत" (१) इति श्रुतेः, "पूर्वो वाऽङ्गत्वात्पिण्डपितृयज्ञ" (२)इति सूत्राच्च(३) । यद्यपि चन्द्रदर्शने याग निषेधः स्मर्यते—

"द्वितीया त्रिमुहूर्ता चेत्प्रतिपद्यापराह्णिकी ।
अन्वाधानं चतुर्दश्यां परतः सोमदर्शना"—

दित्यादिना । तथाप्युक्तन्यायेन वाजसनेयिनां पिण्डपितृयज्ञः परदिन एव । चन्द्रदर्शनेऽप्यपि यागानुष्ठानस्योचितत्वाद्वाजसनेयिव्यतिरिक्तविषयत्वेन पूर्वाह्णमध्याह्नसन्धिविषयत्वेन वा निषेधो नेतव्यः । नचास्य दर्शाङ्गत्वादनाहिताग्नेरेष न भवतीति वाच्यम् । "अनाहिताग्नेरप्येष"(४) इत्युक्तत्वात् । अयं च मृतपितृकस्यैव भवति ।

इति पर्वनिर्णयः समाप्तः ।

---

(१) तै० ब्रा० १।३।१० ।

(२) का० श्रौ० ४।१।२८ ।

(३) अत्र "तत्रैव स्यादिष्टिस्तत्परेऽहनि निर्दिष्टः पिण्डपितृयज्ञोऽत्र कालो वाजसनेयिनां नेष्टिस्तत्सूत्रोतो त्येवित्वा शेषितियरीदिति" इत्यशुद्ध अनन्वितश्च पाठः सर्वपुस्तकेषु समुपलभ्यते ।

(४) का० श्रौ० ४।१।३१ ।

## ( अथ क्षौरनिर्णयः )

अथ क्षौरनिर्णयः । "केशश्मश्रुवपते वाऽशिखमि(१)"ति सूत्रे अशिखं वपनं देवयाज्ञिकादिभिर्व्याख्यातम् । भर्तृयज्ञमते नियमेन वपनम् । वैद्यनाथभाष्ये एव शब्दो निश्चयार्थे कृत्वा वपत एव । कर्कमते वपते न वा वपत इति विकल्पः । पूर्वपक्षो बहुसम्मतः शिष्टाचारोऽप्येवम् । ( वपनस्य दर्शपौर्णमासयोर्विधानात् ) अत्र दर्शपौर्णमासपदाभ्यां स्थालीपाकविधानादावसथ्याग्निमतोऽपि पर्वणि वपनं व्रत्याशनादयो नियमाः श्रौते विहिता भवन्ति । अत एव "प्रवसन्नोपवसेदि"ति छान्दोग्ये ।

"नोपवासः प्रवासे स्यात् पत्नी धारयते व्रतमि"ति—

शाङ्खायनगृह्ये प्रवासे उपवासनिषेधः । न च छन्दोगविषयं तदिति वाच्यं परोक्तस्याविरोधेन उपादेयत्वात् । शिष्टाचारोऽप्येवम् ।

बौधायनोऽपि—

"अनाहिताग्निराधानी पक्षे पक्षे विशेषतः ।
दर्शे च पौर्णमासे च क्षौरं कुर्यात्सदैव हि" ॥

एतेन गृह्याग्निमतां पर्वणि पवनक्षत्याशनादिनियमो नास्त्यनभिधानादिति वदन्तो निरस्ताः ।

वपनाभावेऽपरार्के बौधायनः—

"आहिताग्नेर्द्वयं पर्व पञ्चमी च प्रशस्यते ।

---

( १ ) का० श्रौ० २।१।८ ।

द्वादश्यामथवाष्टम्यां पर्वणोर्यद्यसम्भवः" ॥

अधरपद्धतौ—

"दर्शं च पौर्णमासं च विना चैव तु साग्निकः ।
नान्तरा वपनं कुर्यान्मातापित्रोर्मृतिं विना ॥
उच्छिन्नाग्नेस्तथैव स्याद्वपनं नैव विद्यते ।
अनग्निद्विजवद्धर्मो वैश्वदेवं विना यतः" ।

इत्याहिताग्निरनाहिताग्निक्षौरविधिः । केवलनिरग्निकस्तु—

वशिष्ठः—

"मासि मासि गृहस्थानां पक्षे पक्षे तु यज्वनाम् ।
ऋतावृतौ यतीनां तु यथेच्छं ब्रह्मचारिणाम्" इति ॥

तत्र निषेधं वर्जयित्वा कर्तव्यं गृहस्थैरिति । तदुक्तं वृद्धगार्ग्येण—

"शन्यारसौरिवारेषु रात्रौ पाते व्रतेऽहनि ।
श्राद्धाहः प्रतिपद्रिक्ता भद्रा क्षौरेषु वर्जयेत्" ॥

गार्ग्यः—

"षष्ठ्यमापूर्णिमायां तु चतुर्दश्यष्टमी तथा ।
आसु सन्निहितं पापं त्रिषु तैले भगे क्षुरे" ॥

धर्मप्रवृत्तौ—

"शन्यर्कभौमरिक्तासु षष्ठ्यष्टम्योश्च पर्वसु ।
श्राद्धाहे च व्रते चैव सूतके निशि सन्ध्ययोः" ।

तथा—

"कुम्भे कर्कटके चैव कन्यायां कार्मुके रवौ ।
रोमखंडं गृहस्थस्य पितॄन् प्राशयते नरः" ॥

तस्यापवादः । तदुक्तं कारिकायाम्—

"सर्वां कन्यां परित्यज्य अर्द्धकर्कटकं त्यजेत् ।
धनुःकुम्भौ त्रिधा कृत्वा पूर्वभागं परित्यजेत्" ॥

सूतके तु साग्निनिरग्निकैरवश्यमेव वर्ज्यम्। अन्यदपि निषेधो ग्रन्थान्तरेऽवगन्तव्यः । इति निरग्निकक्षौरविधिः ॥

## ( अथ स्थालीपाकारम्भनिर्णयः । )

अथाधानानन्तरं शुक्ला कृष्णा वा प्रतिपद्भवति तस्यामारम्भः कार्यः । तदुक्तं कारिकायाम्—

"आधानानन्तरं शुक्ला कृष्णा वा प्रतिपद्भवेत् ।
तस्यां पक्षादिकर्मैतत् कार्यं पूर्वाह्ण एव तत्" ॥

हरिहरभाष्ये तु—

"सायमादिप्रातरन्तमेकं कर्म प्रचक्षते ।
पौर्णमासादिदर्शान्तमेकमेव विदुर्बुधाः" ।

इति वचनात्कृष्णपक्षे यद्याधानं तदा दर्शमनिष्ट्वैव पौर्णमास्यां पक्षादिकर्मारम्भः । यत्तु छन्दोगपरिशिष्टवचनं—

"ऊर्ध्वं पूर्णाहुतेर्दर्शः पौर्णमासोऽपि चाग्रिमः ।
य आयाति स होतव्यः स एवादिरिति श्रुते"—

रित्येतत्पुनराधानविषयं तच्छाखिविषयमित्युक्तम् । अत्रैके वदन्त्याधानस्य शुक्लपक्षे विहितत्वात्तदुत्तरं पौर्णमासस्थालीपाककालस्य विद्यमानत्वात्पौर्णमासस्थालीपाकारम्भो युक्तः। तच्चिन्त्यम्,

अस्माकं सूत्रे (१)"दारकाले दायाद्यकाले वे"त्यावसथ्याधानस्यारम्भो युक्तः(२)। ननु "दगयन आपूर्यमाणपक्षे पुण्याह" (३)इत्युक्तत्वाद्विभागोऽपि शुक्लपक्षे स्यात्तदा कृष्णायां प्रतिपद्यारम्भः सिद्ध्येदेव। सत्यम्, विभागस्तावद्रागतः प्राप्तस्तत्र कालापेक्षाभावादापूर्यमाणादिनियमो न स्यादतो यदैव विभागस्तदैवाधानं, ततः प्रतिपद्यारम्भ इति युक्तम्।

नन्वस्तु कृष्णपक्षे शुक्लपक्षे वा विभागः। आधानं तु शुक्लपक्ष एव कार्यम्। नैवम्। कालविलम्बे प्रमाणाभावाद्विभागोत्तरं कार्यमेव, ततो या प्रतिपदायाति तस्यामारम्भ इति। अत्र बहुवक्तव्यमस्ति ग्रन्थगौरवभयान्नोच्यते। यद्यारम्भकाले सूतकमलमासपौषमासगुरुशुक्रास्तबाल्यवार्धक्यग्रहणादि भवति तदापि प्रारम्भः कार्यः। यानि तु तत्रारम्भनिषेधकानि—

"उपरागोऽधिमासश्च यदा प्रथमपर्वणि।
तदा मलिम्लुचे पौषे नान्वारम्भणमिष्यते॥
गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्यग्रहे तथा"

इत्यादीनि सङ्ग्रहकारादिवचनानि तान्यालस्यादिना स्वकालानुपक्रान्तस्थालीपाकादिप्रारम्भविषयकाणीति प्रयोगपारिजातकारः प्रयोगरत्नाकरश्च। तथा चापरार्कस्थं गर्गवच-

(१) पा० गृ० सू २।१।

(२) तत्र यदा दायाद्यकाल आधानं कृतं तदुत्तरं या प्रतिपद्भवति तस्यामारम्भो युक्त"इति गदाधरभाष्येऽ(१२२पत्रे)धिकः पाठः।

(३) पा० गृ० १।४।५।

नमुदाजहार—

"नामकर्म च दर्शेष्टिं यथाकालं समाचरेत् ।
अतिपाते सति तयोः प्रशस्ते मासि पुण्यभे" इति ॥

देवयाज्ञिकैस्तु—"दर्शपूर्णमासानीजान" (१)इति सूत्र-व्याख्याने सूतकशुक्रास्तादिनिमित्तवशादर्शपौर्णमासारम्भोत्कर्षे सत्याग्रयणकाल आगते तदतिक्रमशङ्कायामयं प्रकार इत्युक्तम् । अतो याज्ञिकानामभीष्टः शुक्रास्तादावरम्भ इत्याभाति ।

तथा च त्रिकाण्डमण्डनः—

"आधानानन्तरं पूर्णमासी चेन्मलमासगा ।
तस्यामारम्भणीयादीन्न कुर्वीत कदाचन"(२) इति ॥

आचारोऽप्येवम् ।

## ( पत्न्यादिकर्मप्रयोगः)

अथ प्रयोगः । तत्र प्रथमप्रयोगे आधानानन्तरं प्रथमप्रतिपदि-शुक्लायां कृष्णायां वा प्रातर्होमानन्तरं खरस्थानादग्नेरेकदेशं महानसे स्थाप्य खण्डवैश्वदेवार्थं पाकं कृत्वा निर्णेजनान्तं वैश्वदेवं विधाय मातृपूजनपूर्वकमाभ्युदयिकं कुर्यात् । ततो देशकालौ सङ्कीर्त्य ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं दर्शपौर्णमासस्थालीपाकाख्यं कर्माहं करिष्ये । तदङ्गभूतं गणपतिपूजनं स्वस्तिपुण्याह-

(१) का० श्रौ० ४।८।११ ।
(२) त्रि० मं० १ । १८१ ।

वाचनं मातृपूजनं वसोर्धारापूर्वकमाभ्युदयिकश्राद्धं करिष्ये । श्राद्धं समाप्य देशकालौ सङ्कीर्त्य दार्शिकं पौर्णमासिकं वा स्थालीपाकाख्यं कर्माहं करिष्ये । ततो वैकल्पिकस्मरणम् । तत्र पूर्वेण ब्रह्मणो गमनादिपूर्णपात्रान्तं पूर्ववत् ।

अथ ऋष्यादिस्मरणम् । तत्र पक्षादिकर्ममन्त्राणां प्रजापतिर्ऋषिस्ते च छन्दोहीना लिंगोक्तादेवता होमे विनियोगः । तत्र भूर्भुवः स्वरिति महाव्याहृतीनां प्रजापतिर्ऋषिः क्रमेण गायत्र्युष्णिगनुष्टुप्छन्दांस्यग्निर्वायुः सूर्यो देवतास्त्वन्नः सत्वन्न अयाश्चाग्ने ये ते शतमिति मन्त्राणां वामदेव ऋषिरग्नीवरुणौ देवते द्वयोस्तृतीयस्याग्निर्देवता चतुर्थस्य वरुणः सविता विष्णुर्विश्वेदेवा मरुतः स्वर्का देवता उदुत्तममिति शुनश्शेप ऋषिस्त्रिष्टुप्छन्दः वरुणो देवता सर्वेषामाज्यहोमे विनियोगः ।

अथ देवताभिध्यानम् । तत्र प्रजापतिमिन्द्रमग्निं सोममाज्येन, अग्निं ( उपांशु ) अग्नीषोमौ ( उच्चैः ) अग्नीषोमौ इति पौर्णमासे, दर्शे—अग्निं (उपांशु) विष्णुं ( उच्चैः ) इन्द्राग्नी एताः प्रधानदेवताश्चरुणा, ब्रह्माणं प्रजापतिं विश्वान् देवान् द्यावापृथिव्यौ चरुणा, विश्वान् देवान् भूतगृह्यान् आकाशं एता बलिभिः, अग्निं प्रजापतिं विश्वान् देवान् वैश्वदेवान्नेन, अग्निं स्विष्टकृतं चरुवैश्वदेवान्नेन, अग्निं वायुं सूर्यं अग्नीवरुणौ अग्नीवरुणौ अग्निमयसं वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान् वरुणं प्रजापतिं एता आज्येन स्त्रियं पुमांसं वयसमवयसं शुक्लं कृष्णदन्तं पापीनां पतिं ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तान्

( एते बलयः ) एता देवताः स्थालीपाकाख्ये कर्मण्यहं यक्ष्ये ।

ततो ब्रह्मोपवेशनादिपर्युक्षणान्तं कृत्वा तण्डुलासादनानन्तरं वैश्वदेवान्नस्यासादनं जलेन प्रोक्षणम् , एतावान् विशेषः ।

ॐप्रजापतये स्वाहा । इदं प्रजापतये न मम । ॐइन्द्राय स्वाहा । इदमिन्द्राय न मम । ॐअग्नये स्वाहा । इदमग्नये न मम । ॐसोमाय स्वाहा । इदं सोमाय न मम । ततश्चरुमभिघार्य स्रुवेणावदाय-ॐअग्नये स्वाहा । इदमग्नये न मम । (उपांशु) ॐअग्नीषोमाभ्याꣳ स्वाहा । इदमग्नीषोमाभ्यां न मम । (उच्चैः) ॐअग्नीषोमाभ्याꣳ स्वाहा । इदमग्नीषोमाभ्यां न मम । इति पौर्णमासे ।

अथ दर्शे ॐअग्नये स्वाहा । इदमग्नये न मम । ( उपांशु ) ॐविष्णवे स्वाहा । इदं विष्णवे न मम । (उच्चैः) ॐइन्द्राग्निभ्याꣳ स्वाहा । इदमिद्राग्निभ्यां न मम ।

उत्तरस्तूभयत्र समानम् । ॐब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम। ॐप्रजापययेस्वाहा । इदं प्रजापतये न मम । ॐविश्वेभ्यो देवेभ्यः स्वाहा । इदं विश्वेभ्यो देवेभ्यो न मम । ॐद्यावापृथिवीभ्याꣳ स्वाहा । इदं द्यावापृथिवीभ्यां न मम । उत्तरतस्त्रीणि बलिहरणानि ॐविश्वेभ्यो देवेभ्यो नमः । इदं विश्वेभ्यो देवेभ्यो न मम। ॐभूतगृह्येभ्यो नमः।इदं भूतगृह्येभ्यो न मम । ॐआकाशाय नमः । इदमाकाशाय न मम । त्रयाणां न संस्रवः । ततो वैश्वदेवान्नमभिघार्य ॐअग्नये स्वाहा । इदमग्नये न मम। ॐप्रजापतये स्वाहा। इदं प्रजापतये न मम । ॐविश्वेभ्यो देवेभ्यः स्वाहा। इदं विश्वेभ्यो देवेभ्यो न मम। चरोर्वैश्वदेवान्नस्य चोत्तरार्द्धात् स्विष्टकृत्। ॐअग्नये स्विष्ट-

कृते स्वाहा। इदमग्नये स्विष्टकृते न मम। ततो (आज्येन) भूराद्या नवाहुतयः(१)। संस्रवप्राशनादि(२) प्रणीताविमोकान्तं कृत्वा चरुशेषेण बाह्यतो बलिहरणमुपलिप्तदेशे स्रुवेण ॐनमः स्त्रियै। इदं स्त्रियै न मम। ॐ नमः पुꣳसे वयसेऽवयसे। इदं पुꣳसे वयसेऽवयसे न मम। ॐनमः शुक्लाय कृष्णादन्ताय पापीनां पतये। इदं शुक्लाय कृष्णादन्ताय पापीनां पतये न मम। ॐनमो ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्यः। इदं ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्यो न मम। ॐनमोऽस्तु बलिमेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे ददतु। इदं स्त्रियै पुꣳसे वयसेऽवयसे शुक्लाय कृष्णादन्ताय पापीनां पतये ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्यश्च न मम। मणिकोदकेन चरुशेषप्रप्लावनम्। ततो ब्राह्मणभोजनम्।

ततो वैश्वदेवान्नशेषेण नित्यश्राद्धहन्तकारब्रह्मयज्ञबलिहरणानि कुर्यात्। द्वितीयादिप्रयोगे पूर्वं स्थालीपाकः। पश्चाद्वैश्वदेवः। तदुक्तं कारिकायाम्—

"अकृते वैश्वदेवे तु स्थालीपाकः प्रकीर्तितः।
अन्यत्र पितृयज्ञादौ सोऽपराह्णे विधीयते"॥

प्रथमायां प्रतिपदि तु आभ्युदयिकात्पूर्वं कार्यमिति तत्रैवोक्तम्।

इति स्मार्त्तोल्लासे स्थालीपाकप्रयोगः समाप्तः।

---

(१) पूर्वं १६४ पत्रे द्रष्टव्याः।

(२) संस्रवप्राशनम्। मार्जनम्। पवित्रप्रतिपत्तिः। प्रणीताविमोकः। दक्षिणादानम्।

## ( पिण्डपितृयज्ञः )

अथ पिण्डपितृयज्ञः । तत्र "चन्द्रादर्शनेऽमावास्यायामपराह्णे पिण्डपितृयज्ञ" इति (१)सूत्रम् । दिवसस्य तृतीयभागोत्तरं सोपराह्णे पितृयज्ञः ।

तत्र प्रथमप्रयोगे निर्णेजनान्तं वैश्वदेवं कृत्वा देशकालौ सङ्कीर्त्य गोत्रपितृनामोच्चारणपूर्वकं पिण्डपितृयज्ञारम्भनिमित्तमाभ्युदयिकश्राद्धं मातृपूजनपूर्वकमहं करिष्ये ॥

द्वितीयादिप्रयोगे माध्याह्निकं कर्म नि(वर्त्य)र्वृत्य निर्णेजनान्तं वैश्वदेवं कृत्वाऽग्नेरुत्तरतो दक्षिणाभिमुखो भूत्वा प्राचीनावीतिकरणम् , नीविबन्धनम् , तच्च कुशतिलसंयुक्तानां वस्त्रदशानां सव्यभागे परिहितवस्त्रेण संवेष्ट्यावगूहनमिति देवयाज्ञिकाः । नीविं परिहितमध्येऽवगूहित[हनं]वस्त्रप्रान्तं विस्रंस्येति "नीविं विस्रंस्ये"ति (२)सूत्रव्याख्याने श्रीअनन्तयाज्ञिकाः । "न नीविं कुरुते" (३)इत्येतद्व्याख्याने नीवि परिधानदार्ढ्यार्थं प्रदेशान्तरे प्रदेशान्तरावगूहनार्थमित्युक्तं श्रीअनन्तैः । "नीविं कुरुते सोमस्य नीविरि" (४)त्यत्र च नीविरपवर्तिकेति कर्कादयः । सर्वसूत्रव्याख्यानावलोकने प्रदेशान्तरे प्रदेशान्तरावगूहनमायाति ।

"नीविं वासोदशान्तेन स्वरक्षार्थं प्रबन्धये"—

---

( १ ) का० श्रौ० ४ । १ । १ ।

( २ ) का० श्रौ० ४ । १ । १५ ।

( ३ ) का० श्रौ० ७ । २ । १६ ।

( ४ ) का० श्रौ० ७ । ३ । २३ ।

दित्याश्वलायनः । वेदश्रोणिसन्नहनाच्छादनवाक्यशेषे (१)"दक्षिणत एव हीयं नीविरि"ति ।

"दक्षिणे कटिदेशे तु तिलैः सह कुशत्रयमि"ति—

वृद्धयाज्ञवल्क्यः ।

"नीवी कार्या दशागुप्तिर्वामकुक्षौ कुशैः सहे"ति—

यत्कात्यायनवचनं तद्वृद्धिश्राद्धे ।

"पितॄणां दक्षिणे पार्श्वे विपरीता तु दैविके"—

इति स्मृत्यन्तरात् । वामे दक्षिणे वेत्याचाराद्व्यवस्थे"ति मदन( प्रयोग )पारिजाते ।

ततः सव्यं आचम्य देशकालौ सङ्कीर्त्य अपसव्यं गोत्राणां अस्मत्पितृपितामहप्रपितामहानाममुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां श्रीपितृतृप्तिद्वारा परमेश्वरप्रीत्यर्थं पिण्डपितृयज्ञमहं करिष्ये ।

ततो वैकल्पिकस्मरणम् । अग्निमपरेण पात्रासादनम् । दक्षिणेन लेखाकरणम् । एतत्तेऽन्नमिति पिण्डदानम् । सूत्राण्याच्छादनानि, एतान् वैकल्पिकपदार्थानहं करिष्ये ।

अथ ऋष्यादिस्मरणम् । पिण्डपितृ[यज्ञ]मन्त्राणां प्रजापतिर्ऋषिरग्निः कव्यवाहनः सोमः पितृमान् देवते "अपहता' इति यजुः रक्षांसि देवता 'ये रूपाणीति' त्रिष्टुप् 'अत्र पितर' इति 'नमो व' इ'त्येतद्वः' इति यजुः रक्षांसि 'आधत्ते'ति गायत्री पञ्चानां पितरो देवता 'ऊर्ज्ज'मिति विराट् आपो देवता पिण्डपितृयज्ञहोमे लेखाकरणे उल्मुकनिधाने जपे अञ्जलिकरणे सूत्रदाने मध्यमपिण्डप्राशने अपां

(१) श० ब्रा० १ । ३ । ६ । ६ ।

निषेकेऽस्यग्रारो विनियोगः ।

अथ देवताभिध्यानम् । अग्निं कव्यवाहनं सोमं पितृमन्तं गोत्रं अस्मत् पितरं पितामहं प्रपितामहं चरुशेषेण पिण्डैरहं यक्ष्ये ।

आग्नेयाद्यप्रदक्षिणं दक्षिणाग्रैर्दर्भैः परिस्तरणम् । पात्रासादनम्—अग्निमपरेण दक्षिणाग्राणि प्राग्बिलानि प्राक्संस्थानि, उत्तरेण चेत् प्रागग्राणि दक्षिणबिलानि दक्षिणसंस्थानि । कृष्णाजिनं, ऊलूखलं, मुसलं, शूर्पं, चरुपात्रं, जलं, आज्यं, मेक्षणं, वज्रं, उदपात्रं, सकृदाच्छिन्नानि, तण्डुलाः, सूत्राणि चासादयेत् । कृष्णाजिनादानम् । उत्तरतोऽग्नेरास्तरणम् । शम्याशून्ये उलूखलनिधानम् । पितृतीर्थेन तण्डुलप्रक्षेपः । मुसलादानम् । मुसलयोजनम् । तिष्ठन् त्रिः कण्डनम् । शूर्पादानम् । उद्वपनम् । निष्पवनम् । विवेकीकरणम् । पुनरुलूखले निधानम् । सकृत्फलीकरणम् । चरुस्थाल्यां प्रक्षेपः । सकृत्प्रक्षालनमासादनोदकेन । अधिश्रयणम् । सुशृतस्याभिधारणम् । उद्वासनम् । दक्षिणत अप्रादक्षिण्येनानयनम् । सव्यं जान्वाच्य मेक्षणेन होमः—ॐअग्नये कव्यवाहनाय स्वाहा । इदमग्नये कव्यवाहनाय न मम । तस्माद्दक्षिणतः—ॐसोमाय पितृमते स्वाहा । इदं सोमाय पितृमते न मम । तत्पुरस्ताद्दक्षिणाग्रं मेक्षणप्रक्षेपः । अपरेण दक्षिणेन वा (१)'अपहता' इत्यनेन वज्रेण लेखाकरम् । (२)ये रूपाणी'ति दक्षिणे उल्मुकनि-

---

(१) "ॐ अपहता असुरा रक्षाᳪंसि वेदिषदः" (शु० य० सं० २ । २९ ) ।

(२) "ॐ ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चर-

धानम् । उदपात्रेण दक्षिणासंस्थमवनेजनम् । गोत्र अस्मत्पितः अमु-कशर्मन् अवनेनिक्ष्व । एवं पितामहप्रपितामहयोरवनेजनम् । रेखोपरि सकृदाछिन्नास्तरम्। पिण्डदानम्—गोत्र अस्मत्पितः अमुकशर्मन् वसुरूप एतत्तेऽन्नं स्वधा । इदं गोत्रायास्मत्पित्रे ऽमुकर्मणे वसुरूपाय दत्तं न मम । एवं पितामहप्रपितामहयोः । (१)"अत्र पितर" इति आश्वा-सधारणम् । (२)"अमीमदन्ते"ति विसृज्य प्रत्यवनेजनम्—गोत्र पितः अमुकशर्मन् वसुरूप प्रत्यवनेनिक्ष्व । एवं पितामहप्रपितामहयोः । नीविं विस्रंस्य (३)"नमो व" इति षडञ्जलिकरणम् । (४)"गृहा-न्न" इति जपः । (५)"एतद्वः" इति त्रीणि त्रीणि सूत्राणि ददाति । आचारात्पूजनम् । (६)"ऊर्ज्जमि"ति अपां निषेकः । पिण्डमूले पिण्डोद्धरणम्।अवघ्राणम्। सकृदाच्छिन्नान्यग्नौ प्रक्षेपः, उल्मुकस्य च । सव्यं, उदकोपस्पर्शः । शेषं वैश्वदेवं समापयेत् । पुत्रकामा

---

न्ति । परापुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात्प्रणुदात्यस्मात् ( शु० य० सं० २ । ३० ) ।

( १ ) ॐ अत्र पितरो मादयध्वं यथा भागमावृषायध्वम् ।

( २ ) ॐ अमीमदन्त पितरो यथाभागमावृषायिषत ( य० सं० २ । ३१ ) ।

( ३ ) नमो वः पितरो रसाय । नमो वः पितरः शोषाय । नमो वः पितरो जीवाय । नमो वः पितरः स्वधायै । नमो वः पितरो घो-राय । नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वः ।

( ४ ) गृहान्नः पितरो दत्त सतो वः पितरो देष्म ।

( ५ ) एतद्वः पितरो वास आधत्त ।

( ६ ) ऊर्जं वहन्तीरमृतं घृतम्पयः कीलालं परिस्रुतम् । स्वधा स्थ तर्पयत मे पितॄन् ।

मध्यमपिण्डं पत्नी (१)"आधत्तेति" मन्त्रेण प्राश्नाति। तस्मिन्पक्षे नावघ्राणम्। यजमाने प्रोषिते सति गृहे ऋत्विगादिकरोति तदा नावघ्राणम्। ततो ब्राह्मणभोजनम्। पिण्डपितृयज्ञाख्येन कर्मणा श्री पितृरूपी परमेश्वरः प्रीयताम्।

ततो दर्शश्राद्धम्। अथ स्वकाले स्थालीपाकपिण्डपितृयज्ञयोरकरणे विशेष उच्यते—

"पक्षादि पिण्डयज्ञादि प्रमादादकृतं यदि।
प्रायश्चित्तं ततो हुत्वा कर्तव्यं तद्दिनान्तरे" ॥ इति।

पितृयज्ञस्त्वमावास्यादिन एव भवति न दिनान्तरे। अमायामननुष्ठानेन प्रायश्चित्तत्वेन वैश्वानरश्चरुरेव न पिण्डपितृयज्ञः।

कारिकायाम्—

"मुख्यकाले यदा न स्यात्पौर्णमासः कथञ्चन।
कृत्वाऽनादिष्टमा दर्शात्कर्तव्यो यत्र कुत्रचित् ॥
दर्शात्प्राक्स न वा चेत्स्याद्दर्शेन सह तत्क्रिया।
यदि दर्शोऽप्यतिक्रान्तस्तदा पथिकृ[तिर्भवेत्]तिं चरेत्" ॥

अत्रापि चरुरेवानाहिताग्नेः, आहिताग्नेस्त्विष्टिः। अनाहिताग्नेश्चरव इत्युक्तम्।

"एवं दर्शोऽतिपन्नः प्राक्पौर्णमासान्न चेत्कृतः।
पितृयज्ञं विना सोऽपि कर्तव्यो यत्र कुत्रचित् ॥
न पौर्णमासतन्त्रे स्याद्दर्शो भिन्नप्रयोगतः।

---

(१) अधत्त पितरो गर्भं कुमारं पुष्करस्रजम्। यथेह पुरुषोऽसत्।

पौर्णमासेऽप्यतिक्रान्तेऽतिपत्तिः पथिकृत्तदा" ॥

प्रायश्चित्तन्त्वग्रे वक्ष्यामः । इति स्थालीपाकादिगौणकालाः॥

इति शिवप्रसादकृते स्मार्तोल्लासे पिण्डपितृयज्ञप्रयोगः समाप्तः ।

## ( नवान्नप्रयोगः । )

अथ नवान्नप्रयोग उच्यते । तदुक्तं गृह्यकारिकायाम्—

"वक्ष्ये नवप्राशनमाहितस्य पुण्येऽह्नि तत्कर्म शरद्वसन्ते ।
न पूर्णिमाया नियमस्त्वमाया आचार्यमत्या ग्रहणं न हीदम् ॥
पौष्णद्वये चादितिभद्वये च ब्रह्मद्वये चैव करद्वये च ।
त्रिरुत्तरे विष्णुयुगे ज्ञजीवे सिते च रिक्तातिथिवर्जिते स्यात् ॥
यवैर्वसन्ते यष्टव्यं व्रीहिभिः शरदीज्यते ।
श्यामाकैश्च शरद्येव ग्रीष्मकाले च वेणुजैः ॥
कृताकृतं वेणुयवैर्ब्रदन्त्याग्रयणं बुधाः ।
समानतन्त्रे वा व्रीहिश्यामाकाग्रयणे उभे ॥
कात्यायनमेतेनैके श्यामाकेष्ट्यां न कुर्वते" ।

संग्रहे—

"शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते ॥
वसन्ते च शरद्येव नवान्नप्राशनं भवेत् ।
बुधे गुरौ रवौ वापि वारे स्यादन्यतो न च ॥
रेवत्यां च तथाश्विन्यां रोहिण्यां मृगशीर्षके ।

पुनर्वसौ तथा पुष्ये हस्ते चित्रोत्तरात्रये ॥
श्रवणे च धनिष्ठायामेत्तद्भवति नान्यतः ।
रिक्तातिथिं व्यतीपातं वैधृतिं चावमं दिनम् ॥
संक्रान्तिं करणं विष्टिं विरुद्धं च विवर्जयेत् ।
जन्मस्थे च जलस्थे च पञ्चमे नवमेऽपि वा ॥
नवमैकादशे श्रेष्ठचन्द्रे चैव प्रशस्यते ।
अन्यत्र शुक्लपक्षे च यदाग्रयणमाचरेत् ॥
तदा प्रायश्चितिस्तस्या न त्याज्या धर्मलोपतः'' । इति मुहूर्तः ।

अथ प्रयोगः । तत्र प्रथमप्रयोगे निर्णेजनान्तं वैश्वदेवं विधाय नवान्ननिमित्तमाभ्युदयिकश्राद्धं कृत्वा ततः पत्न्या सह पश्चादग्नेरुपविश्य ॐतत्सत्परमेश्वरप्रीत्यर्थं नवान्नप्राशनमहं करिष्ये ।

ततो वैकल्पिकं स्मरेत् । पूर्वेण ब्राह्मणोगमनम्० भागौ । 'अग्निः प्रथमः प्राश्नात्वि'ति संस्रवप्राशनम् । 'एतमुत्यमि'ति यवप्राशने । पूर्णपात्रं दक्षिणा, एतावदवधारणं करिष्ये ।

अथ ऋष्यादिस्मरणम् । 'शतायुधाय ये चत्वारः स्विष्टमद्य' इति त्रयाणां प्रजापतिस्त्रिष्टुप् इन्द्रः सर्वे देवाग्निर्देवता आज्यहोमे विनियोगः ।

अथ देवताभिध्यानम् । तत्र प्रजापतिमिन्द्रमग्निं सोममिन्द्रं सर्वान् देवान् आज्येन, इन्द्राग्नी विश्वान् देवान् द्यावापृथिव्यौ व्रीहिमयेन यवमयेन वा चरुणा, अग्निमाज्येन, अग्निं स्विष्टकृतं चरुशेषेण, पुनरग्निमाज्येन, अग्निं वायुं सूर्यमित्यादिवरुणान्तं प्रजापतिं एता

देवता आज्येन, अस्मिन्नवान्नप्राशनाख्ये कर्मण्यहं यक्ष्ये ।

ततो ब्रह्मोपवेशनाद्याघारावाज्यभागान्कृत्वाज्येन—

"ॐ शतायुधाय शतवीर्याय शतोतये अभिमातिषाहे । शतं यो नः शरदोऽजीजानिन्द्रो नेषदति दुरितानि विश्वा स्वाहा" । इदमिन्द्राय ।

'ॐ ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति । तेषां योऽज्यानिमजोजिमावहात्तस्मै नो देवाः परिधत्तेह सर्वे-स्वाहा' । इदं सर्वेभ्यो देवेभ्यः ।

ततः स्थालीपाकमभिघार्य स्रुवेण होमः । ॐइन्द्राग्निभ्याᳬस्वाहा । इदमिन्द्राग्निभ्यां न मम । ॐ विश्वेभ्यो देवेभ्यः स्वाहा । इदं विश्वेभ्यो देवेभ्यो न मम । ॐ द्यावापृथिवीभ्याᳬस्वाहा । इदं द्यावापृथिवीभ्यां न मम ।

आज्येन 'ॐ स्विष्टमग्ने अभितत्पृणाहि विश्वाँश्च देवः पृतना अविष्यत् । सुगं नु पन्थां प्रदिशन्न एहि ज्योतिष्मध्ये ह्यजरन्न आयुः स्वाहा' । इदमग्नये न मम ।

चरुणा स्विष्टकृत् । 'ॐ अग्नये स्विष्टकृते स्वाहा । इद मग्नये स्विष्टकृते न मम' । पुनः 'स्विष्टमग्न' इत्याज्याहुतिः ।

ततो भूराद्या नवाहुतयः । ततः संस्रवप्राशनम् । तत्र मन्त्रः— "अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः । भद्रान्नः श्रेयः समनैष्ट देवास्त्वयाऽवशेन समशीमहि त्वा । स नो मयोऽभूः पितो आविशस्व

शं तोकाय तनुवे स्योनः" । अथवा "अन्नपतेऽन्नस्ये"(१)ति प्राशनम् । यवप्राशने–'एतमुत्यं मधुना संयुतं यवꣳ सरस्वत्या अधिवनाय चकृषुः । इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानवः' । एतावान् विशेषः ।

पवित्रमार्ज्ञनादिप्रणीताविमोकान्तं कृत्वा ब्रह्मन् ! अस्य नवान्नप्राशनकर्माङ्गतया यथाविहितोऽयं ते वरः प्रतिगृह्यताम् । (२)द्यौस्त्वेति । ब्राह्मणभोजनम् । अनेन नवान्नप्राशनकर्मणा श्रीयज्ञरूपी परमेश्वरः प्रीयताम् । (३)यस्य स्मृत्येति । क्षमस्व ।

इति शिवप्रसादकृते स्मार्तोल्लासे नवान्नप्राशनप्रयोगः समाप्तः ।

---

## ( उपाकर्मनिर्णयः )

अथोपाकर्मोच्यते । एतच्चाध्ययनप्रवृत्तस्य भवति । अत एवाग्निमतोऽध्यापनं भवति । नह्यग्निमाञ्छक्नोत्यग्निसाध्यं कर्म कर्तुमिति । निरग्नेरप्येतदुपाकर्म लौकिकेऽग्नौ भवतीति गर्गः । न चैतत्कर्कादिसम्मतम् । अत्र पौर्णमास्या एव प्राधान्यात्पौर्णिमाऽभावे हस्तयुक्तपञ्चम्यां कार्यमित्याहुः । यदि ग्रहणं संक्रान्तिर्वा पर्वणि भवति तदा पञ्चम्यामुपाकरणं भवति । तदुक्तं महार्णवे—

---

(१) अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्र दातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे । ( शु० य० सं० ; ११८३ )

(२) द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु ।

(३) "यस्य स्मृत्या" पूर्वं ( १३३ पत्रे ) टिप्पण्यां द्रष्टव्यः ।

"संक्रान्तिर्ग्रहणं वाऽपि यदि पर्वणि जायते ।
तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते" ॥

तथा च—

"संक्रान्तिर्ग्रहणं वाऽपि पौर्णमास्यां यदा भवेत् ।
उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः" ॥

मदनरत्नेऽपि—

"यदि स्याच्छ्रवणं वर्षं ग्रहसंक्रान्तिदूषितम् ।
स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु" ॥

तत्रापि प्रयोगपारिजाते वृद्धमनुकात्यायनौ—

"अर्द्धरात्रादधस्ताच्चेत्संक्रान्तिर्ग्रहणं तदा ।
उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत्" ॥ इति ।

प्रयोगपारिजाते—

"वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ ।
उपाकर्म न कर्तव्यं सिंहयुक्ते तदिष्यत"

इति वचनं देशान्तरविषयम् ।

"नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके ।
कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे" ॥

इति बृहस्पतिवचनात् । पराशरमाधवीयेऽप्येवम् ।
सामगानां सिंहस्थे रवावुक्तेर्बुद्धिषय इदं पुरोडाशचतुर्द्धाकरण(१)-

---

(१) अत्रायं भावः—सन्ति दर्शपूर्णमासयोराग्नेयाग्नीषोमीयै-न्द्राग्नाः पुरोडाशाः । तत्रा "ग्नेयं चतुर्धा करोती" (श० ब्रा० १।८।१।४०)ति श्रुतं चतुर्धाकरणं किं सर्वेषां भवति उताग्नेयस्यैवेति सन्दि-

वदुपसंहियत इति त्वन्ये । एतच्च शुक्रास्तादावपि कार्यम् ।

"उपाकर्मोत्सर्जनं च पवित्रदमनार्पणा"—

मिति वचनात् । पर्वणि ग्रहणे सति पूर्वं त्रिरात्रादिवेधाभाव उक्तः प्रयोगपारिजाते—

"नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च ।
उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते" इति ।

प्रथमारम्भस्तु न भवति । तत्रैव कश्यपः—

"गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्धकेऽपि वा ।
तथाऽधिमाससंक्रान्तौ मलमासादिषु द्विज ॥
प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत्" । इति ।

एतच्च पूर्वाह्णे कार्यम् । तथा च प्रचेतोवचः—

"भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु" इति ।

दीपिकाऽपि—

"अस्य तु विधेः पूर्वाह्णकालः स्मृत" इति । यत्तु—

---

ह्याग्नेयवदैन्द्राग्नाग्नीषोमयोरपि पुरोडाशयोरग्निसम्बन्धादाग्नेयश-ब्देन पुरोडाशत्रयमुपलक्ष्यते । ततस्त्रयाणां चतुर्धाकरणं कर्तव्यमिति पूर्वपक्षयित्वा—न हि 'आग्नेय' इत्ययं तद्धितः सम्बन्धमात्रे विहितः, किन्तु देवतासम्बन्धे । अग्निश्च केवलो द्विदैवत्ययोः पुरोडाशयोर्न दे-वता ततो देवतैकदेशेन कृत्स्नदेवतोपलक्षणत्वादाग्नेयत्वं तयोर्न मुख्य-मिति मुख्य एवाऽऽग्नेये व्यवतिष्ठत इति पूर्वतन्त्रे (३।१सू० २६—२७) सिद्धान्तितं, एवं प्रकृतेऽपि सिंहस्थे रवौ यदुपाकर्मविधानं तत्सामगा-नामेव नान्येषामिति ।

"अध्यायानामुपाकर्म कुर्यात्कालेऽपराह्णके ।
पूर्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुः" ॥

इति गोभिलवचस्तत्सामगविषयम् । तेषामपराह्णस्योक्तत्वात् । तेन वाजसनेयिभिः पूर्वाह्णव्यापिनी तिथिर्ग्राह्या । "दिनद्वये पूर्वाह्णव्याप्तौ एकदेशस्पर्शे वा तैत्तिरीयव्यतिरिक्तानां पूर्वैव" इति हेमाद्रिः ।

मदनपारिजातेऽपि—

"पूर्वविद्धायां श्रावण्यां वाजसनेयिनामुपाकर्म" इत्युक्तम् ॥

मदनरत्ने तु—

"पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयका"—

इति बह्वृचपरिशिष्टे तैत्तिरीयकपदम् । अनुवादत्वात्तस्य च प्राप्त्यधीनत्वात्प्राप्तेश्च यजुर्वेदिमात्रपरत्वात्सर्वयजुर्वेद्युपलक्षणार्थमित्युक्तम् । तथैवानन्तभट्टीयेऽपि—

कारिकायां तु—

"पूर्णिमा प्रतिपद्युक्ता तत्रोपाकर्मणः क्रिया ।
उक्तोऽर्थोऽयं प्रसङ्गेन भविष्योत्तरसञ्ज्ञके" ॥

वस्तुतस्तु हेमाद्रिमतमेव युक्तम् ।

पराशरमाधवीये—

"श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि ।
तदैवोदयिकी ग्राह्या नान्यदौदयिकी भवेत्" ॥

कालादर्शेऽपि—

"श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत्षण्मुहूर्तकैः ।

विद्धा स्याच्छन्दसां तत्रोपाकर्मोत्सर्जनं भवेत्" ।

प्रयोगपारिजाते—

"उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते ।
धारणाध्ययनाऽङ्गत्वाद्गृहीणां ब्रह्मचारिणाम् ॥
उत्सर्जनं च वेदानामुपकर्म तथैव च ।
अकृत्वा वेदजप्येन फलं नाप्नोति मानवः" ॥

"श्रावणस्य पञ्चमीं हस्तेन वा"(१) श्रावणमासस्य शुक्लपञ्चमीं हस्तेन युक्तां प्राप्य वा भवति । तत्रापि प्रायशो हस्त एव भवति । अतः कालद्वयस्योपाकरणे कर्मणोरारम्भः क्रियते तदा प्रथमप्रयोगे श्रवणाकर्म श्रावण्यां तत्पञ्चम्यां उपाकर्म विद्यमानकालान्तरत्वात् ।

## ( उत्सर्गनिर्णयः ) ।

द्वितीयादिप्रयोगे श्रावण्यां पौर्णमास्यामपि क्रमेणोपाकर्मश्रवणाकर्मणी द्वे अपि कर्तव्ये । उपाकर्मोत्तरकालमन्त्रब्राह्मणयोरध्ययनं कर्तव्यम् . पौषमासस्य यावन्मध्यमाष्टका रोहिणीनक्षत्रं च प्राप्नोति तत्र मध्यमाष्टकायां रोहिण्यामधीयमानयोर्मन्त्रब्राह्मणयोरुत्सर्गः । पौषस्य रोहिण्यां मध्यमाष्टकायां वा अध्यायानुत्सृजेयुरिति । अनेन

(१) पा० गृ० २।१०।२ ।

सूत्रेण (१)विहितः कर्तव्यः । तदर्थं मन्त्रब्राह्मणयोरध्ययनं शुक्लपक्षे कर्तव्यं कृष्णपक्षे चाङ्गानां यावदाषाढकृष्णदशमी श्रावणकृष्णदशमी वाऽऽगच्छति तत्रोत्सर्गः "अर्धपञ्चमासानधीत्योत्सृजेयुरर्धसप्तमान्वे"त्यनेन(२)सूत्रेण विहितः कार्यः । अपरे तु एकस्यैवोत्सर्गस्य कालत्रयसाध्यत्वेऽपि केनचित्कारणेन श्रावण्यामेव क्रियते तदभिधीयते ।

## ( उत्सर्गप्रयोगः )

तत उत्सर्गप्रयोगः । पूजोपकरणमृद्गोमयकुशतिलसुमनस आहृत्य ग्रामादुदग्दिशं शिष्यैरन्यैश्च ब्राह्मणैः सह रम्यजलाशयं गच्छेत् । गुरुः शिष्याश्च प्राङ्मुखोपविश्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य छन्दसामुत्सर्गमहं करिष्ये । सर्वैः सहेमामृचं गुरुशिष्याश्च उच्चैर्जपन्ति ।

"उभा कवी युवा यो नो धर्मः परापतत् । परिसख्यस्य धर्मिणो विसख्यानि विसृजामहे"(३) ।

ततः शिष्या गुरुमभिवाद्य यथाज्येष्ठमभिवादयेयुः । ततः सूत्रोक्तस्नानं(४) कृत्वा ऋष्यादिपूजनमुत्सर्गतर्पणं विसर्जनं च (कार्यम्) । अत ऊर्ध्वं परस्परमविरोधश्च नियमेन सर्वेषाम् । गुरुगृहे

---

(१) पा० गृ० २।१२।१ ।

(२) पा० गृ० २।११।१०-११ ।

(३) पा० गृ० २।११।१२ ।

(४) पूर्वं ९७ पत्रे टिप्पण्यां स्नानसूत्राणि द्रष्टव्यानि ।

त्रिरात्रं वासः । ततो गृहे गमनम् । एतावानुत्सर्गः । यस्त्वर्धष-ण्मासानधीत्योत्सर्गो यदि उपाकर्मकाले क्रियते तदा स्नानादिकं तन्त्रेण कार्यमित्युत्सर्गः ।

## ( उपाकर्मप्रयोगः )

अथोपाकर्मप्रयोगः । तत्र प्रथमप्रयोगे प्रातर्होमानन्तरमग्नि मुद्धृत्य पाकं कृत्वा निर्योजनान्तं वैश्वदेवं विधाय अध्यायोत्सर्गोपा-कर्मनिमित्तमाभ्युदयिकं कृत्वा ततोऽक्षततिलदर्भदूर्वापामार्गादि, ऋष्यर्थं गन्धपुष्पादि (पूजासामग्रीं च) गृहीत्वा जलाशयं ग च्छेत् । ततः पादौ प्रक्षाल्य पूर्ववत्सूत्रोक्त(१)स्नान—सन्ध्योपस्थान-ब्रह्मयज्ञपूर्वकं तर्पणान्तं कर्म कुर्यात् ।

तत्रायं प्रयोगः । प्राणानायम्य देशकालौ सङ्कीर्त्य अध्यायो-त्सर्गोपाकर्मनिमित्तं देवर्षिमनुष्यपितृतर्पणार्थं गणस्नानमहं करि-ष्ये । यथाविधि स्नानादितर्पणान्तं नित्यक्रियां कृत्वा ततः शान्ति-पाठं पठित्वा सप्तर्षींश्च स्थापयेत् । तदुक्तं कारिकायाम्—

"कश्यपोऽथ भरद्वाज अङ्गिरा गौतमस्तथा ।
वत्सः पराशरमाण्डव्य एते सप्तर्षयः स्मृताः(२) ॥
प्रतिष्ठावाहनं चैव कालज्ञानं ( तथैव च ) भवेत्ततः ।

---

( १ ) पूर्वं ९७ पत्रे टि० द्रष्टव्यः ।

( २ ) 'कश्योऽथ भरद्वाज अङ्गिरा गौतमो मुनिः ।
वत्सः पराशरश्चेति माण्डव्यः सप्तमस्तथा" इति मुद्रितश्राव-णीप्रयोगपाठः ।

पूजोपवीतिदानं स्यात्प्राचीनावीतिपूर्वकम् ॥
उत्सर्ग( तर्पणं चैव )पितरश्चैव आचान्तो वंश एव च ।
तत्सवितुरित्यारभ्य सावित्र्या ब्रुवणं ततः ॥
विरताः स्म इति सकृदध्यायादीन् पठेत्तदा ।
तदेतदृचाभ्युक्तं नमस्कारो विसर्जनम् ॥
समुद्रेति जले प्राश्य द्विराचान्तो गृहं व्रजेत्" ॥

ततः कश्यपभरद्वाजाङ्गिरोगौतमवत्सपराशरमाण्डव्यारुन्धत्या दर्भपवित्रैस्त्रिभिस्त्रिभिः सावित्र्या ग्रन्थिः कार्या । ततस्तान् प्रागग्रानुदगग्रांश्च स्थापयेत् । ॐ भूर्भुवः स्वः कश्यपमावाहयामि स्थापयामि । एवं भरद्वाजमङ्गिरसं गौतमं वत्सं पराशरं माण्डव्यमरुन्धतीमावाहयामि स्थापयामि । स्वान् ऋषींश्च प्रवरांश्च स्थापयेत् । (१)'मनो जूति'रिति प्रतिष्ठाप्य (२)'इमामेव' उच्चैर्जपः ।

ततः प्राणानायम्य देशकालौ सङ्कीर्त्य अध्यायोत्सर्गोपाकर्मनिमित्तं ऋषिपूजनं च करिष्ये ।

(३)'इदं विष्णुरिति' मन्त्रेण कश्यपाद्यरुन्धतीसहितसप्तर्षिभ्यो नमः । आसनपाद्यादिसर्वोपचारयज्ञोपवीतानि दद्यात् । एवं स्वऋषिपूजनम् । यज्ञोपवीतदानं—प्राचीनावीती गोत्रेभ्य अस्मत्पितृगणेभ्य अस्मन्मातामहेभ्य इमानि यज्ञोपवीतानीति दद्यात् । सव्यं, सर्वेभ्यो ब्राह्मणेभ्यश्चन्दनानुलेपनदक्षिणा उपवीतानि च द-

(१) शु० य० सं० २।१३।
(२) श० ब्रा० १४।५।२।६।
(३) शु० य० सं० ५।१५।

द्यात् । अत्र जीर्णोपवीतत्यागः । तदुक्तम्—

(१)"उपाकर्मे सूतकान्ते चातुर्मास्यगते अपि ।
नवयज्ञोपवीतं च धृत्वा जीर्णं विसर्जयेत्" ॥

तत उत्सर्गतर्पणम् । दक्षिणं जान्वाच्याञ्जलिना देवास्तृप्यन्ताम् । छन्दाँसि तृप्यन्ताम् । वेदास्तृप्यन्ताम् । ऋषयस्तृप्यन्ताम् । पुराणाचार्यास्तृप्यन्ताम् । गन्धर्वास्तृप्यन्ताम् । इतराचार्यास्तृप्यन्ताम् । संवत्सरः सावयवस्तृप्यताम् । देव्यस्तृप्यन्ताम् । आचार्यस्तृप्यताम् । अहोरात्राणि तृप्यन्ताम् । अर्द्धमासास्तृप्यन्ताम् । मासास्तृप्यन्ताम् । ऋतवस्तृप्यन्ताम् । गौतमस्तृप्यताम् । भरद्वाजस्तृप्यताम् । वशिष्ठस्तृप्यताम् । कश्यपस्तृप्यताम् । विश्वामित्रस्तृप्यताम् । अत्रिस्तृप्यताम् । जमदग्निस्तृप्यताम् । अरुन्धतीतृप्यताम् । ततो दक्षिणमुखा प्राचीनावीतिनः सव्यं जान्वाच्य गोत्राणां पितृपितामहादीनां यथोक्ततर्पणं कुर्युः । ततः सव्येन पितृमातृगोत्रस्थान् ऋषींस्तर्पयेत् । ततो वंशानामनुप्रवचनम् । (२)अथ वंशः । वंशान्ते वंशोक्ता ऋषयस्तृप्यन्ताम् । 'ततः तत्सवितुरि'त्या-(३)रभ्य सावित्र्यानुब्रुवणं सर्वेषाम् । तदन्ते विरताः स्म इति सकृत् । ततो मन्त्रब्राह्मणयोरध्यायादीन् अन्तकाण्डकाफक्किकान्तपठनं सर्वेषां

---

(१) उपाकर्मणि चोत्सर्गे गते मासचतुष्टये ।
नवयज्ञोपवीतानि धृत्वा पूर्वाणि संत्यजेत् । इति मुद्रित-श्रावणीप्रयोगपाठः ।

(२) श० ब्रा० १४।५।५।२०॥१४।७।३।२६॥

(३) शु० य० सं० ३।३५

तदेतदृचाभ्युक्तं पठेत्। ऋषीन्नमस्कृत्यो'(१)त्तिष्ठ ब्रह्मणस्पत' इति विसर्जनं ग्रन्थीन् मुक्त्वा (२)'समुद्रङ्गच्छे'ति जलाशये स्थापयेत्। ततो द्विराचमनम्। अग्नेः पश्चात् पत्न्या शिष्यैः सह प्राङ्मुख उपविश्य आवसथ्ये खर्परमधिश्रित्य तत्र यवान् प्रक्षिप्य खर्परस्याधोऽग्निं प्रज्वाल्य यवानां भर्जनानन्तरं पृथक्करणं होमार्थं भक्षणार्थं च।

ततः प्राणानायम्य देशकालौ सङ्कीर्त्य परमेश्वरप्रीतये अध्यायोत्सर्गोपाकर्माहं करिष्ये।

ततो वैकल्पिकं स्मरेत्। पौर्णमास्यामुपाकरणम्। पूर्वेण ब्रह्म० भागौ। सावित्रीमन्त्रेण तिलहोमं पूर्णपात्रं दक्षिणा त्रिरात्रं लोमनखानामनिकृन्तनम्। एतान् वैकल्पिकान्पदार्थानहं करिष्ये।

अथ ऋष्यादिस्मरणम्। उपाकर्ममन्त्राणां=प्रजापतय इत्याद्यनुमतये स्वाहेत्यन्तानां मन्त्राणां प्रजापतिर्ऋषिस्ते च छन्दोहीना लिङ्गोक्ता देवता होमे विनियोगः। 'सदसस्पतिमि'ति स्वयम्भूर्ब्रह्मा गायत्री धानाहोमे विनियोगः। 'तत्सवितुरि'ति विश्वामित्रो गायत्री सविता देवता धानाहोमे विनियोगः। 'शन्नो भवन्त्वि'ति वशिष्ठ विराट् वाजिनो देवता धानाभक्षणे विनियोगः। 'दधिक्राव्ण' इति वामदेवोऽनुष्टुप् सुरभी दधिप्राशने विनियोगः। 'तत्सवितुरि'ति विश्वामित्रो गायत्री सवितादेवता तिलहोमे विनियोगः। भूर्भुवः स्वरिति पूर्ववत्

(१) शु० य० सं० ३४।५६
(२) शु० य० सं० ६।२१

सर्वेषामाज्यहोमे विनियोगः । 'सह नोऽस्तु' इति ब्रह्मा यजुः ब्रह्मा-देवता जपे विनियोगः ।

अथ देवताभिध्यानम् । तत्र प्रजापतिमिन्द्रमग्निं सोममन्तरिक्षं वायुं ब्रह्माणं छन्दांसि पृथिवीमग्निं ब्रह्माणं छन्दांसि दिवं सूर्यं ब्रह्माणं छन्दांसि दिशश्चन्द्रमसं ब्रह्माणं छन्दांसि प्रजापतिं देवान् ऋषीन् श्रद्धां मेधां सदसस्पतिं अनुमतिं एता अङ्गप्रधानदेवता आज्येन सदसस्पतिं धानाभिः सवितारं तिलैः धानाशेषेणाग्निं स्विष्टकृतं, अग्निर्वायुः सूर्यादि पूर्ववत् प्रजापतिं एता देवता पुनराज्येन एता अङ्गप्रधानार्था देवता अस्मिन्नुपाकर्मण्यहं यक्ष्ये ।

ततो ब्रह्मोपवेशनाद्याज्यभागान्तं कृत्वा पात्रासादने आज्यानन्तरं धानासादनमिति विशेषः । अथोपकल्पनीयानि—प्रतिशिष्यं नवसमिधः आर्द्राः सपत्रा औदुम्बरस्य दधि भक्षार्थं धाना भक्षणार्थाः। आकर्षफलकं तिलाश्चेत्युपकल्पनीयानि ।

तत आज्यभागानन्तरं (१)ॐअन्तरिक्षाय स्वाहा । इदमन्तरिक्षाय न मम । ॐ वायवे स्वाहा । इदं वायवे न मम । ॐब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम । ॐछन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न मम । (२)ॐपृथिव्यै स्वाहा । इदं पृथिव्यै न मम । ॐअग्नये स्वाहा । इदमग्नये न मम । ॐब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम । ॐछन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न

(१) यजुर्वेदोपाकर्मणि ।

(२) ऋग्वेदोपाकरणे ।

मम । (१)ॐदिवे स्वाहा । इदं दिवे न मम । ॐ सूर्याय स्वाहा । इदं सूर्याय न मम । ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम । ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न मम । (२)ॐदिग्भ्यः स्वाहा । इदं दिग्भ्यो न मम । ॐ चन्द्रमसे स्वाहा । इदं चन्द्रमसे न मम । ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम । ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न मम । प्राजापत्याहुतयस्तन्त्रेण । ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम । ॐ देवेभ्यः स्वाहा । इदं देवेभ्यो न मम । ॐ ऋषिभ्यः स्वाहा । इदं ऋषिभ्यो न मम । ॐ श्रद्धायै स्वाहा । इदं श्रद्धायै न न मम । ॐ मेधायै स्वाहा । इदं मेधायै न मम । ॐ सदसस्पतये स्वाहा । इदं सदसस्पतये न मम । ॐ अनुमतये स्वाहा । इदमनुमतये न मम ।

ततो धाना अभिघार्य स्रुवेणावदाय (३)'सदसस्पति'मिति मन्त्रेण जुहुयात् । इदं सदसस्पतये न मम । मन्त्रं गुरुः शिष्यैः सह पठति । शिष्यैः सह औदुम्बरसमिधोऽभिघार्य तिस्रस्तिस्रो गृहीत्वोत्तिष्ठन्तः प्राङ्मुखा'स्तत्सवितुरि'ति हुत्वा इदं सवित्रे, एकां समिधमादध्युः । एवं द्वितीयां तथा तृतीयाम् । ततः सर्वे उपविशेयुः । पुनराचार्येण धानाः स्रुवेणावदाय सदसस्पतिमिति मन्त्रेण धानानां होमः ।

---

( १ ) सामवेदोपाकर्मप्रयोगे ।

( २ ) अथर्वोपाकरणे ।

( ३ ) ॐसदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिम्मेधामयासिष ꣳ स्वाहा ( शु० य० सं० ३२।१३ ) ।

पुनः शिष्यैः सह तत्सवितुरिति पूर्वोक्तहोमः । पुनः उपविशेयुः सदसस्पति मन्त्रेण धानाहोमः, तथैव शिष्यैः सह समिद्धोमः । सर्वे उपविशेयुः ब्रह्मचारी तु शिष्यः—(१)"अग्नये समिधमाहार्षमि"ति मन्त्रेण समिद्धोमः । न सावित्र्या । तत उपकल्पितधानास्तिस्रस्तिस्रो गृहीत्वा "शन्नो भवन्तु वाजिन"(२)इति दन्तैरखादन्तः प्राश्नीयुः । ततो द्विराचमनम् । (३) 'दधि क्राव्ण' इति दधि भक्षयेयुः । द्विराचम्य तत आचार्यो यावन्तं शिष्यगणं इच्छेत्तावतस्तिलान् गणयित्वा आकर्षफलकेनादाय सावित्रीमन्त्रेण जुहुयात् । इदं सवित्रे । अथवा 'शुक्रज्योति'रित्यनुवाकेन जुहुयात् । अत्र न संस्रवः । ततः पूर्वोक्तधानाभ्यः स्विष्टकृत् । अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम । ततो भूराद्या नवाहुतयः । संस्रवप्राशनादि प्रणीताविमोकान्तं कृत्वा ततोऽग्निमुत्तरेण कुशेषु प्राङ्मुखेभ्य उपविष्टेभ्यः प्राङ्मुख आचार्यः ओङ्कारमुक्त्वा त्रिश्च सावित्री मनुब्रूयात् । तथा 'तत्सवितुरि'त्यादि सर्वमन्त्रब्राह्मणयोरध्यायादीन् प्रब्रूयात् । बह्वृचां ऋषिमुखानि पर्वाणि छन्दोगानाम् । सूक्तान्यथर्वणानाम् । एवं सर्वे पठित्वा सह शिष्याः प्रजपन्ति ।

सह नोऽस्तु सह नोऽवतु सह न इदं वीर्यवदस्तु
ब्रह्म । इन्द्रस्तद्वेद येन यथा न विद्विषामहे । इति ।

त्रिरात्रं नाधीयीरन् । लोमनखानामनिकृन्तनम् । न वपनं

---

(१) पा० गृ० २ । ४ । ३ ।

(२) शु० य० सं० ६ । १६ ।

(३) शु० य० सं० २३ । ३२

करिष्यामहे इति सर्वेषां सङ्कल्पः। प्रागुत्सर्गाद्वा नियमो लोमनखानामनिकृन्तनस्य। उत्सर्गावधि लोमनखानामनिकृन्तनमहं करिष्ये इति। छन्दसामुत्सर्गात् प्राक्मन्त्रब्राह्मणयोरध्ययनम्। ततः पाकशेषेण मनुष्ययज्ञादीन् कुर्यात्। ततो ब्राह्मणभोजनम्। अनेनोपाकर्माख्येन कर्मणा श्रीपरमेश्वरः प्रीयताम्।

इति पुष्करवल्लीस्थशिवप्रसादकृते स्मार्तोल्लासे
उपाकर्मप्रयोगः समाप्तः।

---

## ( प्रवासविधिकारिका: )

अथ प्रवासविधिरुच्यते—

"धीमच्छिवप्रसादेन सूत्रशास्त्रस्य सम्मतिम्।
आलोक्य सम्यक्क्रियते प्रवासविधिनिर्णयः"॥

प्रवासलक्षणं गृह्यकारिकायाम्—

"यदि सीमामतिक्रम्य रात्रौ तत्रैव वत्स्यति।
अगृहस्य प्रयाणं यत्प्रवासः प्रोच्यते बुधैः॥
यत्तु नारायणेनोक्तं ग्रामाच्चाग्निसमन्वितात्।
गत्वा ग्रामान्तरे वासः प्रवासोऽयमितीदृशः॥
ग्रामान्तरे नगर्यां वा पल्यां वाऽन्यत्र वा क्वचित्।
सीमामतीत्य चेद्रात्रौ वासः प्रवसनं स्मृतम्॥

निक्षिप्याग्निं स्वदारेषु परिकल्प्य च ऋत्विजम् ।
प्रवसेत्कार्यवान् विप्रो न वृथैव चिरं क्वचित् ॥
नाग्निकार्यस्य वेलायां प्रवसेन्न च पर्वणि ।
न विनापि निमित्तेन क्रीडाद्यर्थं सदा बुधः ॥
प्रवसेद्धनसम्पत्त्यै न तीर्थाय कदाचन ।
इति कूर्मपुराणोक्तं तथा बौधायनेन च ॥
प्रविश्य चानलं पश्चादुपविश्योपतिष्ठते ।
प्रवत्स्यामीति सङ्कल्पस्ततो ब्रूयान्नमोऽग्नये ॥
अग्न्यन्तिकं समारभ्य तावन्मौनी प्रतिष्ठते ।
यावच्छर्दींषि दृश्यन्ते हव्यवाहनसद्मनि ॥
अनलादर्शनं यावत्तावच्छाङ्खायनश्रुतिः ।
स्वबुद्धिकल्पिते देशे इति वाजसनेयिनः(१) ॥
प्रोषितस्य विधिश्चायमत्रेदानीं निरूप्यते ।
होमादीनां यथाकालं याजमानं(२) भवेदिति ॥
अग्न्यन्तिके मनः कृत्वा तां दिशं सन्निरीक्ष्य च ।
आचम्य प्राङ्मुखो भूत्वा कुर्यात्त्यागान् यथाक्रमम् ॥

---

(१) "गच्छति मत्या वाग्विसर्जन" (का० श्रौ० ४।१२।१४) मित्याम्नानात् ।

(२) "प्रवसन्याजमानं कुर्याद्यथाकालमात्मसंस्काराद् धर्ममात्रत्वाच्छ्रुते (श० ब्रा० १।३।१।५-६) श्च" (४।१२।१५) इति कात्यायनकल्पवचनात्प्रवसता यजमानेन यदात्मत्संस्कारा व्रतग्रहणमुण्डनादयः यस्माद्दृष्टार्थमर्थकर्म तत्सर्वं कर्तव्यम् ।

सौराग्निकान् जपेन्मन्त्रान् इति वृद्धस्य सम्मतम् ।
पितृयज्ञं चरुं होमं विनाऽन्यस्त्यागसंयुतम् ॥
पाक्षिकं नैत्यिकं कर्म कृत्वा चैव यथाविधि ।
सङ्कल्पपूर्वकांस्त्यागांस्तान्कुर्यात् पञ्चयज्ञियान् ॥
पितृणामपसव्येन मनुष्याणां निवीतिना ।
दक्षिणोदङ्मुखः कुर्यात् क्रमात् पितृमनुष्ययोः ॥
नात्र जानुनिपातः स्यात्प(रा)दार्थत्वादिति श्रुतिः ।
स्वकाले ब्रह्मयज्ञः स्यादेवं पक्षादिकर्मसु ॥
आचम्य पिण्डयज्ञः स्यात्प्राचीनावीतिना ततः ।
नीवीबन्धनमापूर्य कुर्यात्त्यागान् यथाक्रमम् ॥
आहुती पिण्डयज्ञस्य नीवीविस्रंसनं तथा ।
गृहान्नः पितरो जप्त्वा सव्यं कृत्वा जपेत्पुनः ॥
नद्यादिषु यथान्यायं प्रोष्यैत्य स्नानमाचरेत् ।
प्राप्तस्य वेश्म कर्तव्यं शौचमाचमनादिकम् ॥
ततोऽग्निसन्निधौ मौनी(न)भाव(वाच)मेवं विमुञ्चति ।
भारद्वाजोऽब्रवीदेवं ततोऽग्निमुपतिष्ठते ॥
उपस्थाने कृते मौनं त्यजेदित्याश्वलायनः ।
उपविश्यानलं पश्चात् प्रत्यक्षीकृत्य केनचित् ॥
नमोऽग्नये जपं कृत्वा शिरसा प्रणमेच्च तम् ।
गृहा मेति गृहान् गच्छेत् क्षेमायेति प्रविश्य च ॥
अभ्यर्च्य पित्राचार्यादीन् जायापुत्रस्य दर्शने ।
अङ्गादङ्गादिति मन्त्रं जपेत्(जिघ्रेत्)पुत्रस्य मस्तकम् ॥

प्रजापतेष्ट्वा मन्त्रेण पुत्रनाम विनिर्दिशेत् ।
नाम सम्बोधनयुतं सङ्कीर्त्याथापरेण च ॥
त्रिर्जिघ्रेदेव मन्त्रेण सकृत्तूष्णीं द्विरेव तु(१) ।
भवेत्प्राङ्मन्त्रशेषोऽस्मिन्नवजिघ्रपदादिकः ॥
अस्मे प्रयन्धि मघवन् जपेदस्यैव दक्षिणे ।
कर्णे सव्ये भवत्विन्द्र श्रेष्ठानीति ( जपेदिदम् ) भवेदमून् ॥
पुत्रं दृष्ट्वादिकं कर्म (कर्णे)जपान्तं प्रतिपुत्रकः ।
क्रमादङ्गादिति जपः सकृदेव भवेदयम् ॥
स्त्रीणां मूर्द्धानमेवाऽवजिघ्रेत्तूष्णीं यथाक्रमम् ।
उभयोस्तुल्य एव स्यादावसथ्याग्निहोत्रयोः" ॥

इति गृह्यकारिकोक्तः प्रवासविधिः ॥

---

## (साग्निकप्रवासे पाक-श्राद्ध—वैश्वदेवाग्न्यादिनिर्णयः )

**अथ प्रवासे भोजनविधिः—**

गृहे वैश्वदेवादिनिर्णय उच्यते । रुद्रकल्पद्रुमे—नित्यपाकस्यावसथ्याग्नौ विहितस्याभावात्स्वगृह एव ब्रह्मयज्ञवर्जिता देवयज्ञादयश्चत्वारो यज्ञाः पत्न्या ऋत्विगादिद्वारा कारणीयाः । पाकयज्ञ-

---

( १ ) इत ऊर्ध्वं "भवेत्प्राङ्ममेषास्मिन्नैव जिघ्रयदादिकम्" इत्यनन्वितः पाठः सर्वादर्शपुस्तकेषु समुपलभ्यते ।

त्वेन तेषां गृह्याग्निसाध्यत्वात् "न स्त्री जुहुयान्नानुपेत" (आ० ध० ६।१५।१७-१८) इति निषेधात्पत्नी न स्वयं जुहोति। अयं निषेधस्तु ऋत्विगादिसन्निधावेव प्रवर्तते तदसन्निधौ तु पत्न्यपि स्वयं देवयज्ञादि करोति।

"नोपवासः प्रवासे स्यात् पत्नी धारयते व्रतम्।
पुत्रो भ्राताऽथवा पत्नी शिष्यो वाऽस्य बलिं हरेत्"॥

इति शाङ्खायनगृह्ये (२।१७),

"प्रोषिते वाप्यशक्तौ (क्ते) वा स्वामिन्यनधिकारिणि।
पुत्रो भ्राताऽथवा पत्नी शिष्यो वा जुहुयादिति"—

रेणुकारिकायां च, देवयज्ञादिषु चतुर्षु यज्ञेषु पत्नीकर्तृकत्वस्याप्युक्तत्वात्। निरग्नेस्तु स्वकर्तृका एव पञ्चमहायज्ञाः। यत्तु—

"पचनं यदि कुर्वीत प्रवसन्नग्निमान् द्विजः।
समारोपे कृते चाग्नेर्वैश्वदेवं तु लौकिके॥
पत्नी च यजमानोऽथ प्रवासे गच्छतो(स्तयोः)यदि।
समारोप्य ततः कुर्याद्वैश्वदेवं पराग्निना"॥

एभिर्यज्ञपार्श्वादिवाक्यैर्यदा समारोपेऽरणीसहितो गच्छेत्तदा लौकिकाग्नौ पाकं कृत्वा तदग्निमध्ये वैश्वदेवपूर्वकं लौकिकाग्नौ पक्वं भुञ्जीत।

मदनपारिजाते, परिशिष्टेऽपि—

"प्रवसेदाहिताग्निश्चेत्कदाचित् कालपर्ययात्।
यस्मिन्नग्नौ भवेत्पाको वैश्वदेवस्तु तत्र वै"॥

इत्यादिवचनबलाद्वैश्वदेवः प्रवासेऽपि साग्निना कार्य इत्युक्तं

तद्यस्यां शाखायां पञ्चमहायज्ञेभ्यो वैश्वदेवबलिहरणयोः पृथग्विधिरस्ति तच्छाखिकर्तृकवैश्वदेवविषयम्।

वाजसनेयिनां तु "अथातः पञ्च महायज्ञा"इत्यादिना(१)पारस्कराचार्यैः पञ्चमहायज्ञमात्रविधानेन वैश्वदेवबलिहरणयोः पृथग्विधानाभावात् पञ्चमहायज्ञेष्वेवास्माकं वैश्वदेवव्यवहारात्। येषामपि वैश्वदेवबलिहरणयोः पृथग्विधिरस्ति तेषामपि पञ्चमहायज्ञानुष्ठानं स्वगृह एवोक्तम्। यच्च—

"पञ्चयज्ञविधानं च गृहे यस्य न जायते।
पत्नी सन्निहिते ह्यग्नौ कथं कार्यं प्रवासिना॥
गृह्योक्तेन विधानेन दैवभौतनृपैतृकान्।
तथा ब्राह्ममहामेधान् प्रोषितो लौकिके चरेत्"॥

इत्युक्तं तद्यस्यां शाखायां पत्नीसन्निहिते गृह्येऽग्नौ पञ्चमहायज्ञानुष्ठानं विहितं नास्ति तच्छाखिकर्तृकदेवयज्ञादिविषयं "पञ्चयज्ञविधानं च गृहे यस्य न जायते। पत्नी सन्निहिते ह्यग्नावि"त्युक्तत्वात्।

अस्माकं पारस्करगृह्यसूत्रानुसारिणां वाजसनेयिनां तु न प्रवासे ब्रह्मयज्ञवर्जिता देवयज्ञादयश्चत्वारो यज्ञा भवन्ति। "चत्वारः पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति"(२) सूत्रे देवयज्ञादीनां चतुर्णां यज्ञानां पाकयज्ञत्वाभिधानात्। पाकयज्ञसमाख्यानान्यथाऽनुपपत्त्या च पाकयज्ञानां गृह्याग्निसाध्यत्वावग-

---

(१) पा० गृ० २।९।१।
(२) पा० गृ० १।४।१।

मात् । हुतयज्ञः=हूयत एवाग्नौ यस्मिन् कर्मणि न बलिप्रदानं स हुतः । यथा सायंप्रातःकालीनमौपासनस्य परिचरणं देवयज्ञोपाकर्मादयश्च । अहुतः=न हूयतेऽग्नौ यस्मिन् कर्मणि सोऽहुतः पाकयज्ञः । यथा भूतयज्ञसर्पबलिस्रस्तरारोहणमणिकावधानानि । प्रहुतः=प्रकर्षेण हुतः यत्र होमो बलिहरणं च, प्रकर्षश्च बलिप्रदानाधिक्यात् । यथा पत्न्यादिश्रवणाकर्मादयः । यद्वा हुत एव पत्न्यादिश्रवणाकर्मादेरन्तर्भावः । हूयते प्रधानतयाऽग्नौ स प्रहुतः ।

"पित्र्यं यत्पिण्डदानादि कर्म स प्रहुतो मखः" ।

प्रेतश्राद्धं विना । एतदुक्तम्—

"सपिण्डीकरणान्तानि प्रेतश्राद्धानि यानि वै ।

तानि स्युर्लौकिके वह्नाविति शाट्यायनोऽब्रवीत्" ।

विस्तारोऽत्र रुद्रकल्पद्रुमेऽ(१)वगन्तव्यः। प्राशितः=यत्र प्राश्यते न होमो नापि बलि(हरणं)प्रदानम्। यथा नृयज्ञो "यथार्हं भिक्षुकानतिथींश्च सम्भजेरन्(२) इति । तथा "सर्वासां पयसि पायसꣳ श्रपयित्वा ब्राह्मणान् भोजयेदि"(३)ति । तदेवं स्वगृह्यविहितानां देवभूतपितृमनुष्योपादानाच्चतुर्णां यज्ञानां पाकयज्ञत्वात्तेषु गृह्याग्निमत एवाधिकारः सिद्धः । अत एव देवयज्ञादीनां चतुर्णां सत्यपि प्रवासे गृह्ये(हे) एवानुष्ठानमित्युक्तं, अस्तु तर्हि पञ्चमप्रकारेण ब्रह्मयज्ञस्य पाकयज्ञत्वव्युदासार्थं चत्वार इति ग्रहणम् । एवं चानग्निनापि ब्रह्म-

---

(१) रु० क० ६२-६३ पत्रे ।

(२) पा० गृ० २।६।१२।

(३) पा० गृ० ३।६।८।

यज्ञः कर्तव्य एव ।

"नोपवासः प्रवासे स्यात् पत्नी धारयते व्रतम् ।

पुत्रो भ्राताऽथवा पत्नी शिष्यो वाऽस्य बलिं हरेदि"ति—

शाङ्खायनगृह्ये (२।१७), पञ्चमहायज्ञान् प्रकृत्य 'प्रोषिते वा०' पूर्वोक्तरेणुकारिकायां च गृह्याग्नावेव स्वगृहे देवयज्ञादीनां चतुर्णामनुष्ठानस्याभिहितत्वात्प्रवासकर्तारं प्रकृत्य—

"प्रवासे नैत्यिकं कर्म कृत्वा चैव यथाविधि ॥

सङ्कल्पपूर्वकांस्त्यागान् तान् कुर्यात्पञ्चयज्ञवदि"ति रेणुकारिकायामौपासनाग्निपरिचर्यायाः पञ्चमहायज्ञ( वत् )त्यागकर्तव्यतां वदता पञ्चमहायज्ञानुष्ठानस्य स्वगृहे दर्शितत्वात् वैश्वदेवबलिहरणयोः पञ्चमहायज्ञेभ्यः पृथक्त्वेन विध्यभावात्तेष्वेव वैश्वदेवव्यवहारो वाजसनेयिनामित्युक्तत्वाच्च । आशार्कभाष्येऽपि 'न प्रवासे वैश्वदेव' इत्युक्तत्वाच्च । अथातो धर्मजिज्ञासापद्धतौ गगोंपाध्यायैरपि साग्नेः प्रवासे सति यावत् प्रवासं होमवैश्वदेवयोरभाव इत्युक्तत्वाच्च, अतएव—

"निक्षिप्याग्निं स्वदारेषु(१) परिकल्प्य च ऋत्विजम् ।

प्रवसेत् कार्यवान् विप्रो वृथैव(मृषैव)न चरेत्कचित्" ॥

इति छन्दोगपरिशिष्टे कात्यायनेन (२)लौकिकाग्नौसा-

---

( १ ) 'परिकल्प्यर्त्विजं तथा' इति का० स्मृ० १६—१ पाठः ।

( २ ) "प्रवासोपस्थितावग्निसाध्यकर्मणां स्वगृह एवानुष्ठेयत्वेन तदर्थमृत्विक्परिकल्पनमभिहितं किं च—

"स्वेऽग्नावेव भवेद्धोमो लौकिके न कदाचन ।

ग्निकसम्बन्धिहोमोऽपि प्रतिषिद्धः । तस्मादग्निमतः प्रवासे देवयज्ञाद-यश्चत्वारो यज्ञा न भवन्ति । (१)( अग्निमिति लौकिके न पुनः संस्कृते पूर्ववदन्नतैर्हुत्वेति पूर्ववदित्यनेन गृह्योक्तं होममात्रं गृह्यते स च होमः सायंप्रातःकालीनस्तन्त्रेण पूर्ववद्बलिकर्मेति भवति ) किन्तु स्वगृह एव गृह्याग्नौ । अत एवोक्तं देवभाष्ये कठसूत्रे "प्रवसन्यदा हुतं मन्येताथ भुञ्जीत पर्वण्युपोष्य यदा संस्थितं मन्येताथ भुञ्जीते"ति । प्रवासे देवयज्ञाद्यनुष्ठानं चिकीर्षितं चेत्स्यात्तदा "प्रवसन्यदा हुतं मन्येते"ति नावक्ष्यत् , किं तर्हि "प्रवसन् हुत्वा भुञ्जीते" त्येवमेवा-वक्ष्यत् ।

एवं दर्शश्राद्धादिकमपि स्वगृह एवानुष्ठेयं "चत्वारः पाकयज्ञा" इति(२) पारस्करगृह्ये "प्रहुतः पितृकर्मणे"ति शाङ्खायनगृह्ये (१।१०)च पितृकर्म(णां)णः श्राद्धापरपर्यायस्य प्रहुतपाकयज्ञत्वाभि-धानात् । "अष्टकाः पार्वणं श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्था" इति गौतमस्मृतौ च श्राद्धस्य पाकयज्ञसंस्थासु परिगणितत्वात् पाकयज्ञानां च गृह्याग्निसाध्यत्वनियमात् ।

"अमावास्यादिनियतं प्रोषिते सहचारिणी ।
पत्यौ (पत्नी) तु कारयेत् श्राद्धमन्येनाप्यृत्विगादिने"ति—

---

न ह्याहिताग्नेः स्वं कर्म लौकिकेऽग्नौ विधीयत" (का०स्मृ० १९।१४) इति तत्रैव कात्यायनेन" इति ( रु० क० ५९ ) पाठस्त्रुटितः प्रति-भाति "क" पुस्तके ।

( १ ) धनुश्चिन्हान्तर्गतं नास्ति क० ख० पु० ।

( २ ) पा० गृ० १।४।१।

ब्रह्मपुराणवचनात् । आदिशब्देन त्र्याहादिनियतसौत्रश्राद्ध-ग्रहणम् । तस्मादग्निमान्प्रवासी स्वगृह एव ऋत्विगादिद्वारा ब्रह्म-यज्ञवर्जं पञ्चमहायज्ञ–दर्शश्राद्ध–त्र्याहश्राद्धादिकुर्यादिति सिद्धम् ।

हेमाद्रिपद्धतौ व्यासो विशेषमाह—

"त्यक्ताग्नेः पार्वणं नै(चै)व नैकोद्दिष्टं कदाचन ।
अत्यक्ताग्नेस्तु पिण्डोक्तिस्तस्मात्सङ्कल्प्य भोजयेदि"ति ॥

अत्यक्ताग्निमदधिकारिणां प्रत्येव पिण्डोक्तिः=श्राद्धोपदेश इत्यर्थः । तेन प्रवासाभावेऽपि पुनराधाने सति गृह्याग्नेः पुनराधानं कृत्वैव श्राद्धं कार्यं, अन्यथा श्राद्धानधिकारात् ।

इति साग्निकश्राद्धादिनिर्णयः ॥

---

## ( प्रवासे पाकभोजनविधिः )

अथ पाकभोजनविधिः। पूर्णिमाऽमावास्ययोस्तु साग्नेः पराग्नि-सिद्धान्नभोजनं निषिद्धमेव ।

"पराग्निपक्वं नाश्नीयात्पर्वणि प्रोषितोऽग्निमानि"ति वचनात्

"दर्शे च पौर्णमासे च पराग्निपक्वभोजने ।
आधानादिकृतं नश्येच्छ्रौतं स्मार्तं तथैव चे"ति—

वचनान्तराच्च । अत्रान्येनाहितोऽग्निः पराग्निशब्देनाभिधी-

यते । अतो लौकिकाग्निपक्वं न निषिद्धमिति केचित् ।

अपरे त्वेवमाहुः—स्वाहितात्परस्यैवाग्नेः पराग्निशब्देनाभिधानाल्लौकिकाग्निपक्वमपि निषिद्धमेवेति ।

एवं च सति पर्वणि पराग्निपक्वनिषेधात्प्रवसतोऽग्निसान्निध्याभावेन पाकाभावादुपवासे प्राप्ते—

"नोपवासः प्रवासे स्यात्पत्नी धारयते व्रतमि"ति—

शाङ्खायनगृह्ये, "प्रवसन्नोपवसे"दिति छान्दोग्ये चोपवासनिषेधात्कथं वर्तनीयमित्याकाङ्क्षायां—

"प्रवसन्नग्निमान् विप्रः पयोमूलफलादिभिः ।
कालं नयेदशक्तौ तु विधिना पाकमाचरे"दिति—
वचनेन पयोमूलफलादिभक्ष्यद्रव्यं विधीयते ।

न च प्रवासे गृह्याग्न्यभावेन पाकाभावात् "प्रवसन्नग्निमानि"ति वाक्ये पर्वपदाश्रवणाच्च पयोमूलफलादिना कालनयनं सार्वकालिकमिति वाच्यं, तथा सति "पराग्निपक्वं नाश्नीयादि"ति वाक्ये पर्वग्रहणस्य "दर्शे च पौर्णमासे चे"ति वाक्ये दर्शादिग्रहणस्य च वैयर्थ्यापत्तेः । तस्मात् "पराग्निपक्वं नाश्नीयादि"त्ययं निषेधः पर्वण्येव प्रवर्तत इति केचिदाहुः ।

अपरे त्वेवमाहुः—नित्यपाकस्य गृह्याग्निसाध्यत्वात्प्रवासे च गृह्याग्न्यभावेन पाकाभावात्प्रवासे पर्वान्यकालेऽपि पाकं विनैव पयोमूलादिना कालनयनं कुर्यात् । तदसामर्थ्ये तु पृष्ठोदिविविधानेन पाकमपि कुर्यात् । तदुक्तम्—

"प्रवसन्नग्निमान् विप्रः पयोमूलफलादिभिः ।

कालं नयेदशक्तौ तु विधिना पाकमाचरेदि''ति ॥

यत्तु—''पराग्निपक्वं नाश्नीयादि''ति वचनं यच्च ''दर्शे च पौर्णमासे चेति''ति वचनं तदुभयमपि विधिमतिक्रम्यापि रागतः पराग्निपक्वभक्षणे प्रवृत्तं प्रति दोषाधिक्यज्ञापनार्थमिति । कन्दुपक्वं (१)तु न निषिद्धं शिष्टाचारात् । तथा च त्रिकाण्डमण्डनः—

''इक्षुक्षीरविकारांश्च भ्राष्ट्रभ्रष्टान्यवाँस्तथा ।
फलमूला(दि वा)नि चाश्नीयात् पर्वणि प्रोषितोऽग्निमान् ॥
पराग्निपक्वं नाश्नीयाद्विहाय गुडगोरसौ ।
शाकपिण्याकसक्त्वादि आममद्यात्फलादिकम् ॥
सकृत्पर्वणि सर्पिष्मद्धविष्यं लघुभोजनम् ।
न सायं नोपवासश्च सायं शाकास्तथै(व च)क्षवमि''ति ॥

अन्यच्च—

''प्रवसन्नग्निमान् विप्रः पयोऽश्नीयात्फलान्यपि ।
अशक्तौ तु पचेदन्नं भुञ्जीत विधिपूर्वकम् ॥
ज्वरिणो रोगिणो वापि पाकं कृत्वा तु भोजनम् ।
सामर्थ्ये तु पुनर्जाते नैवाश्नीयात्पराग्निना''—
इति गृह्यकारिकायाम् ।
''अकृतं केनचिद्भोज्यमन्नं पूर्वमचोदितम् ।
आज्यं भोजनपर्याप्तमश्नीयाद्दोषदर्शनात् ॥
असामर्थ्ये शरीरस्य भक्ष(क्ष्य)द्रव्याद्यभावतः ।

---

(१) ''कन्दुपक्वं–भाषायां हलवाईकृतमिति प्रसिद्धम्'' इति ख. पुस्तकेऽधिकः ।

स्वहस्तेन पचेदन्नमश्नीयात्प्रोषितोऽग्निमान्" ॥

इत्यापस्तम्बपरिशिष्टे केशवस्वामिना निरूपितमशक्तविषये, तन्न समर्थस्य । तथा सर्वदा प्रवासे गुडगोरसादिकं पराग्निपक्वमश्नीयादिति यदुक्तं, दर्शपौर्णमासयोस्तदपि न ग्राह्यं ग्रन्थान्तरे दर्शपौर्णमासविषये बाधश्रवणात् ।

"गोरसश्च गुडो वाऽथ फलमूलेक्षवस्तथा ।
पराग्निपक्वं यत्किञ्चिच्छाकमाज्यं तथैव च ॥
साग्निः पर्वणि नाश्नीयात्प्रवासे सर्वदा बुधः ।
गृहे चैव न दोषः स्यादाज्यादीनां तु पर्वणि" ॥ इति ।

प्रवासे उष्णोदकेन स्नायात् । शीतनिवारणार्थं प्रवासे पर्वणि पराग्निं न सेवेत । चूर्णक्वाथादि न भक्षयेत् । प्रवासग्रहणाद्गृहे न दोषः ।

तथा च स्मृतिभास्करे हारीतः—

"धनमर्जयितुं दूरे आहिताग्निर्गतो यदा ।
भुनक्त्यन्नमपक्वं हि भुङ्क्ते क्षीरं गुडोऽपि वा ॥
आधानेच्छुरनिच्छुर्वा यावद्देहस्य धारणम् ।
पराग्निपक्वं नाश्नीयादुच्छिन्नाग्निस्तु सर्वदा ॥
अग्नित्यागे तु यत्प्रोक्तं प्रायश्चित्तं तदेव तु ।
प्राजापत्यानि कुर्वीत (ह्यार्जने)प्रवासे भोजने ध्रुवम् ॥
तस्मादेतैर्न कर्त्तव्यं पक्वं लोकाग्निना बुधैः ।
उच्छिन्नाग्निर्विशेषेण न कुर्याद्भोजनं क्वचित्" ॥

गृहे सूतिकायास्तु पर्वणि पराग्निभक्षणे न दोषः ।

तदुक्तम्—

"सूतिसम्बन्धि यत्किञ्चित्कर्म तल्लौकिकेऽनले ।
पर्वण्यपि च यत्प(क्व)क्तिमश्नीयान्नैव दोषभाक्" ॥

(१) सर्वाधानिनस्त्वौपासनाग्न्यभावाद्गृहेऽपि लौकिकाग्नावेव पाक इति न तस्य प्रवासे कश्चिद्विशेषः । गृह्याग्नावदृष्टार्थविहितेन पाकेन वैश्वदेवादिदृष्टकार्ये सिद्धे न पुनस्तदर्थं पृथक्पा(कश्रपणं)काश्रयणं युक्तं, न च दृष्टार्थस्यैव पाकस्य गृह्याग्नौ नियमः, असति दृष्टकार्ये पकाभावप्रसङ्गात् । न चेष्टापत्तिः—

"पचनाग्नौ पचेदन्नं सूतके मृतकेऽपि वा ।
अपचन्नेकरात्रेण पुनराधानमर्हती"ति—

यज्ञपार्श्वे वैश्वदेवाद्यभावेऽप्यदृष्टार्थतया पाककर्तव्यताया नियमितत्वात् ।

यत्तु कश्चिदाह—आशौचे वैश्वदेवानधिकारे तदर्थपाकस्यावसथ्ये विहितस्याभावाद् गृहस्थितेनापि साग्निना फलाहारादिकमेव कार्यमिति, तन्न युक्तं—आशौचे वैश्वदेवानधिकारेऽपि "पचनाग्नौ पचेदन्नमि"ति यज्ञपार्श्ववचनेन नित्यपाकस्यादृष्टार्थतया विहितस्य पचनाग्नौ कर्तव्यताया नियमितत्वेन पाकसद्भावात् । निरग्नेस्तु स्वात्मार्थं पाकनिषेधादाशौचे वैश्वदेवाद्यभावात्तदर्थः पाको न प्राप्नोति । अत एव "लब्धक्रीताशना वा स्यु"रित्युक्तं(२), एतदस-

(१) अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः ।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता ॥ इति ॥

(२) पा० गृ० ३।१०।२६ ॥

म्भवे तु कुटुम्बा(र्थे)र्थं पाकः करणीयः । तच्छेषं स्वयं भुञ्जीयात् । कुटुम्बासन्निधाने तु फलाहारादिकमेवोचितमिति । किञ्च—

"देवार्थं यः पचेदन्नं पुत्रार्थो यस्य मैथुनम् ।
पुण्यार्थं यः पठेद्वेदान्धर्मार्थं यस्य जीवितम्" ।। इति ।

फलादिशब्दो हविष्यान्नेऽपि वर्तते । तदुक्तं श्रीधरेण—

"जलं विना यदन्नं तु पक्वं केवलपावके ।
तदन्नं फलवद्ग्राह्यं नोच्छिष्टं मनुरब्रवीत्" ।।

इत्यादिना न दोषः । अन्नस्य लवणोदकयोगे अग्निलवणयोगे वा घृतगुडयोगे वा (न) दोषः ।

"तण्डुलेष्वग्निसंयोगात्पिष्टं लवणयोगतः ।
पानीयमन्नसंयोगात्स्पर्शदोषो न जायते" ।

स्पर्शत्वनिषेधादन्नशब्दस्तन्न भवति । उदकं विना केवलक्षीरतण्डुलैर्यः पाकः सम्भवति तस्यापि नान्नशब्दः । "पायसान्नेन ब्राह्मणान् भोजयेदि"त्यनेनान्नशब्दो दृश्यते तस्मात्तस्य विकल्पः । अग्न्युदकलवणादिसर्वसंयोगेन यत्पक्वं तन्निषिध्यत इत्यादिज्ञातव्यम् ।

इति साग्निकप्रवासे भक्ष्याभक्ष्यनिर्णयः ।

---

## ( प्रवासे सायम्प्रातर्होमः ) ।

अथ प्रवासविधिनिर्णयः । ततो ब्राह्मे मुहूर्त्ते चोत्थाय प्रातर्होमादिकं विधाय देशकालौ सङ्कीर्त्य धनार्जयितुं प्रवासं करिष्ये ।

नमोऽग्नय इति नमस्कृत्य आज्ञां गृहीत्वा मौनेन गृहसीमां वाऽग्न्यागारादीनामदर्शनं यावत्तावद्वा मौनेन गच्छेत्पश्चाद्यथेच्छम्। यथाकाले सङ्कल्पपूर्वं त्यागः। देशकालौ सङ्कीर्त्य सायम्प्रातरौपासनहोमं करिष्ये। इदमग्नये। इदं प्रजापतये। (१)समास्त्वेति नवर्चं जपेत्। प्रातर्होमे प्रातर्होमं करिष्ये। इदं सूर्याय। इदं प्रजापतये। (२)विभ्राडित्यनुवं जपेत्। इति होमः। यथाकाले ब्रह्मयज्ञः।

## ( प्रवासे वैश्वदेवः। )

अथ वैश्वदेवत्यागः। इदं ब्रह्मणे न मम। इदं प्रजापतये न मम। इदं गृह्याभ्यो न मम। इदं कश्यपाय न मम। इदमनुमतये न मम। इदं पर्जन्याय न मम। इदमद्भ्यो०। इदं पृथिव्यै०। इदं धात्रे०। इदं विधात्रे०। इदं वायवे०। चतुर्वारम्। इदं प्राच्यै दिशे०। इदं दक्षिणायै०। इदं० प्रतीच्यै०। इदमुदीच्यै। इदं ब्रह्मणे०। इदमन्तरिक्षाय०। इदं सूर्याय०। इदं विश्वेभ्यो देवेभ्यो०। इदं विश्वेभ्यो भूतेभ्यो०। इदमुषसे०। इदं भूतानां पतये न मम। इदं पितृभ्यः स्वधा नमः। इदं यक्ष्मणे ०। प्रवासे मनुष्यार्थं यथोक्तं ब्राह्मणभोजनं कुर्यात्। इति वैश्वदेवः।

## ( प्रवासे स्थालीपाकः। )

इदं प्रजापतये न मम। इदमिन्द्राय०। इदमग्नये०। इदं सोमाय० ततः प्रधानदेवताः(पौर्णमासे–) इदमग्नये०।(उपांशु) इदमग्नीषोमा-

---

(१) समास्त्वेत्यादयो मन्त्राः पूर्वं २०३ पत्रे टिप्पण्यां द्रष्टव्याः।

(२) विभ्राडित्यनुवाकः २०७ पत्रे द्रष्टव्यः।

भ्यां० । (उच्चैः)इदमग्नीषोमाभ्यां० । दर्शे–इदमग्नये० । (उपांशु) इदं विष्णवे० । (उच्चैः)इदमिन्द्राग्निभ्यां० । इदं ब्रह्मणे० । इदं प्रजापतये० । इदं विश्वेभ्यो देवेभ्यो० । इदं द्यावापृथिवीभ्यां० । बलिहरणम् । इदं विश्वेभ्यो देवेभ्यो० । इदं भूतगृह्येभ्यो० । इदमाकाशाय० । वैश्वदेवान्नाहुतिः–इदमग्नये० । इदं प्रजापतये० । इदं विश्वेभ्यो देवेभ्यो० । इदमग्नये स्विष्टकृते० । नवाहुतयः–इदमग्नये० । इदं वायवे० । इदं सूर्याय० । इदमग्नीवरुणाभ्यां० । इति द्विवारम् । इदमग्नये अयसे । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम । इदं वरुणायादित्यायादितये० । इदं प्रजापतये० । इदं स्त्रियै० । इदं पुंꣳसे वयसेऽवयसे न मम । इदं शुक्राय कृष्णदन्ताय पापिनां पतये न मम । इदं ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्यश्च न मम । इदं स्त्रियै पुंꣳसे वयसेऽवयसे शुक्राय कृष्णदन्ताय पापिनां पतये ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्यः० । ब्राह्मणभोजनसङ्कल्पः । इति स्थालीपाकः ।

## ( प्रवासे पिण्डपितृयज्ञः )

अथ पिण्डपितृयज्ञः । देशकालौ सङ्कीर्त्य श्रीपितृतृप्तिद्वारा परमेश्वरप्रीत्यर्थं पिण्डपितृयज्ञमहं करिष्ये । प्राचीनावीतिकरणम् । नीवीबन्धनम् । इदमग्नये कव्यवाहनाय० । इदं सोमाय पितृमते० । गृहान्नेति (१)जपः । नीवीं विसृज्य सव्यं, आचमनम् । इति

( १ ) 'गृहान्नः' पूर्वं २३२ पत्रे टिप्पण्याम् ।

पितृयज्ञः ॥

## ( प्रवासे आग्रयणम् )

अथ प्रवासे आग्रयणं, पत्नी गृहे ऋत्विगादिर्वा करोति। प्रवासे त्यागः। आज्यभागं पत्नादिवत्। विशेषः—इदमिन्द्राय०। इदं सर्वेभ्यो देवेभ्यो०। इदमिन्द्राग्निभ्यां०। (उपांशु)इदं विश्वेभ्यो देवेभ्यो० इदं द्यावापृथिवीभ्यां०। इदमग्नये०। (उच्चैः)इदमग्नये स्विष्टकृते०। इदमग्नये०। ततो नवाहुतित्यागः पत्नादिवत्। इत्याग्रयणम्।

## ( प्रवासादागतस्य साग्नेर्गृहोपस्थानादिविधिः )

अथ आगते सति तत्स्थानान्मौनी शुचिर्गृहमागत्य प्रादुष्करणमावसथ्यं नमस्कृत्योपविश्य तृणान्यवलुप्योत्तिष्ठन् वसतिगृहमागत्य गृहानुपतिष्ठते(१)"गृहा मा" इत्यादि "शं योः शं योः" इत्यन्तं जपेत्। अथ पशवः "उपहूता इह गाव" इत्यादि "शंयोः शंयोः" इत्यन्तं जपेत्। पुत्रं दृष्ट्वा जपति "अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतम्"। पुत्रस्य मूर्धानमवजिघ्रति "प्रजापतेष्ट्वा हिंकारेणावजिघ्रामि सहस्रा-

---

( १ ) ॐ गृहा मा विभीत मा वेपध्वमूर्जं बिभ्रत एमसि। ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ॥ येषामध्येति प्रवसन्येषु सौमनसो बहुः। गृहानुपह्वयामहे ते नो जानन्तु जानतः॥ उपहूता इह गाव उपहूता अजावयः। अथो अन्नस्य कीलाल उपहूतो गृहेषु नः। क्षेमाय वः शान्त्यै प्रपद्ये शिवꣳ शग्मꣳ शंयोः शंयोः (शु० य० सं० ३।४१-४३)।

युषाऽमुकशर्मन् त्वं जीव शरदः शतम् । गवां त्वा हिंकारेणावजिघ्रामि सहस्रायुषाऽमुकशर्मन् त्वं जीव शरदः शतम् । सकृन्मन्त्रेण द्विस्तूष्णीम् । तस्यैव दक्षिणकर्णे जपति ।

"अस्मे प्रयन्धि मघवन्नृजीषिन्निन्द्ररायो विश्ववारस्य भूरेः ।

अस्मे शतꣳ शरदो जीवसेऽधा अस्मे वीराञ्छश्वत इन्द्र शिप्रिन्" ।

सव्ये कर्णे जपति "इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे । पोषꣳ रयीणामरिष्टिं तनूनाꣳस्वाद्मानं वाचः सुदिनत्वमह्नामि"ति ।

स्त्रियै तु मूर्द्धानमेवावजिघ्रति तूष्णीं पश्चाद्वाग्विसर्गः । तदहर्न कस्य कोपं कुर्यात् ।

इति प्रवासविधिप्रयोगः ॥

---

## ( प्रवसतो यष्टुर्होमफलनिर्णयः )

यजमाने प्रवासस्थे होमस्याल्पफलम् ।

"प्रदीपचन्द्रिकायां तु अल्पहोमे फलस्मृतिः ।

यजमाने प्रवासे च तुरीयांशं फलं सदा" ॥

तथा च—

"यजमाने प्रवा(सस्थे)से स्यात् पत्नी यदि रजस्वला ।

सूतिका वा भवेद्वापि अष्टमांशं फलं तदा ॥
यजमाने समीपस्थे पादोनं लभते फलम् ।
होमाधिकारी जाते तु तुरीयांशं भवेद् ध्रुवम् ॥
न्यूनं फलं भवेत्तस्मात्प्रवासे चैव सर्वदा" ॥

## ( प्रवसतः साग्निकस्य पाकविधिः )

अथ प्रवासे पाकश्रपणार्थं पृष्ठोदिविविधानं लिख्यते ।

ततः 'अन्वग्निरि'त्यनेन ग्रामादग्नेराहरणम् । निन्द्यगृहादाहृतश्चेद्भूमौ निधाय तस्योपरि विशुद्धं शुष्कगोमयपिण्डं शुष्ककाष्ठं वा धारयित्वा तं पक्त्वा तत् प्रज्वलितं गृहीत्वा पूर्वमग्निं विहाय तद्गृहीत्वा स्थानान्तरे स्थाप्य पुनरन्यं तस्योपरि धारयित्वा एवं त्रिवारं कृत्वा पश्चाच्चतुर्थमग्निं गृहीत्वा भूसंस्कारपूर्वकमग्निं संस्थाप्य पाकः कार्यः ।

'अन्वग्निरि'त्यस्य पुरोधाग्निस्त्रिष्टुबग्न्याहरणे विनियोगः । (१)'अन्वग्निरि'त्यनेनाग्निहरणम् । 'पृष्टो दिवी'ति कुत्सोऽग्निस्त्रिष्टुबग्निस्थापने विनियोगः। (२)"पृष्टो दिवी"त्यनेन स्थापनम् । 'समितमि'ति द्वयोः प्रजापतिरुष्णिगुपरिष्टाद्बृहत्यौ चित्योख्यावग्नीदेवतेऽग्न्युपस्थाने

---

( १ ) अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः । अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततन्थ (शु०य०सं०११।१७)।

( २ ) पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश । वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषस्पातु नक्तम् ( शु० यं० सं० १८।७३ ) ।

विनियोगः । "समितठं० सङ्कल्पेथाम्"(१)। महाव्याहृतीनां प्रजापति-
र्गायत्र्युष्णिगनुष्टुप् , अग्निर्वायुः सूर्यो देवता, 'ताᳫंसवितुरि'त्यस्य कण्वस्त्रिष्टुप् 'तत्सवितुरि'त्यस्य विश्वामित्रगायत्री, 'विश्वानि देव सवितरि'त्यस्य श्यावाश्वगायत्री त्रयाणां सविता देवताऽग्निप्रज्वालने विनियोगः ।

ॐ भूर्भुवः स्वः "ताᳫंसवितुः (२)तत्सवितुः (३)विश्वानि-देवे"ति (४)त्रिभिः प्रज्वालनम् । पुनस्त्वेति समिन्धनम् 'पुनस्त्वे'ति प्रजापतिस्त्रिष्टुप् अग्निसमिन्धने विनियोगः ।

"ॐ पुनस्त्वा"(५) प्रज्वलितस्यापि पुनरिन्धनप्रक्षेपेण प्र-

---

( १ ) समितठं० सङ्कल्पेथाᳫंसम्प्रियौ रोचिष्णू सुमनस्यमानौ । इषमूर्जमभिसंवसानौ । सं वां मनाᳫंसि सं व्रता समु चित्तान्याकरम् । अग्ने पुरीष्याधिपा भव त्वं न इषमूर्जं यजमानाय धेहि ( शु० यं० सं० १२।५७-५८ )।

( २ ) ॐ ताᳫंसवितुर्वरेण्यस्य चित्रामाहं वृणे सुमतिं विश्वजन्याम् । यामस्य कण्वो अदुहत्प्रपीनाᳫंसहस्रधारां पयसा महीं गाम् ( शु० य० सं० १७।७४ ) ।

( ३ ) ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ( शु० य० सं० ३०।२ ) ।

( ४ ) ॐ विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रं तन्न आसुव ( शु० य० सं० ३०।३ ) ।

( ५ ) ॐ पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः । घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः ( शु० य० सं० १२।४४ ) ।

दीप्तकरणं समिन्धनम् । पाकश्रपणम् । ब्राह्मणार्थमन्नोद्धरणम् । ततो भोजनमिति । होमवैश्वदेवयोरभावस्तस्य प्रवासं यावदिति सिद्धान्तः ।

इति साग्निकप्रवासे पाककविधिः ।

---

## ( पृष्ठोदिविविधान–प्रसवोत्थानपरिशिष्टोक्तो-निरग्निकवैश्वदेवविधिनिर्णयः । )

अथेदानीं निरग्निकवैश्वदेवविधिरुच्यते ।

तत्र वाजसनेयिनो गृह्येऽनग्निकं प्रति वैश्वदेवान्तरविधेरनुक्तत्वाद्वैश्वदेवाकरणापत्तिरिति । तन्न, स्वगृह्ये निरग्निकं प्रति वैश्वदेवान्तरविधेरविधानेऽपि गर्गपद्धति–हरिहरभाष्य–गदाधरभाष्यधृतपृष्टोदिविविधानपरिशिष्टे-प्रसवोत्थानपरिशिष्टे चरणव्यूहोक्ते यज्ञपार्श्वपरिशिष्टे च तद्विधानात् ।

तथाच पृष्टोदिविधानपरिशिष्टे—

"अथातो धर्मजिज्ञासा केशान्तादूर्ध्वमपत्नीक उच्छि(त्स)न्नाग्निरनग्निको वा प्रवासी ब्रह्मचारी (वा) चान्वग्निरिति ग्रामादग्निमाहृत्य पृष्टोदिवीत्यधिष्ठाप्य समितमिति द्वाभ्यामुपस्थाय व्याहृतिभिस्तिसृभिश्च सावित्रैः प्रज्वाल्य ताꣳसवितुस्तत्सवितुर्विश्वानि देव सवितरिति पुनस्त्वेति समिध्य पूर्ववदत्तैर्हुत्वा पाकं पचेत्तत्र वैश्वदेवं कुर्यात् । ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृत इत्युपस्पृश्य पूर्ववद्बलिकर्म नैवंकृते वृथापाको

भवति न वृथापाकं पचेन्न वृथा।।कृपश्नीयादत्र पिण्डपितृयज्ञवत्त्वा-
ग्राग्रयणानि कुर्यादिति ।

अस्यार्थः । अथ शब्दो गृह्यकल्पविहितपञ्चमहायज्ञानन्तर्य-प्रज्ञप्त्यर्थः । अग्निमतो गृहस्थस्य तदधिकारात्तद्रहितस्याधिकारस्य विधेयत्वादतो हेतोः कतिपयधर्मजिज्ञासा । ज्ञातुमिच्छायां "सुपां सु"-इति[१] सुपां सुपोभवन्तीति सप्तमीस्थाने प्रथमा उच्यते । केशा-न्तादूर्ध्वमुपकुर्वाणः स्नातको वा अपत्नीकः=अविवाहितपत्नीको मृतपत्नीको वा उच्छिन्नाग्निः=पतिताग्निः संस्थिताग्निर्वा अनग्निकः=कृतदारसङ्ग्रहोऽपि निमित्तवशादधिकाराभावेनानाहितावसथ्याग्निः, प्रवासी=साग्निकश्चिकीर्षितपाकः । तदुक्तम्—

"प्रवसन्नग्निमान् विप्रः पयोमूलफलादिभिः ।
कालं नयेदशक्तौ तु विधिना पाकमाचरेत्" ॥

इति पाकमात्रविधानादेव साग्निकस्य न प्रवासे वैश्वदेवः । अ-तएव गर्गोपाध्यायैरुक्तम्—"साग्नेः प्रवासे सति यावत्प्रवा-सं होमवैश्वदेवयोरभाव" इति । ब्रह्मचारी नैष्ठिकः ।

ननु ब्रह्मचारिणः "यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावु-भावि"तिपाकविधानाभावात् कथमेतदुक्तम् । उच्यते—पितृश्रा-द्धादौ तस्यापि पाकसम्भवात् ।

गर्गोपाध्यायास्तु 'ब्रह्मचारिणः स्वाग्निविच्छेदे सत्यने-नैव विधिनाग्न्याहरणादिप्रज्वालनान्तं विधाय समिदाधा-

(१) पा० ७।१।३९

कार्यम् । इदं चाग्न्याहरणं समिदाधानार्थं नित्यपाकस्य तु निवृत्तिस्तस्ये'त्याह तच्चिन्त्यम् । यतः पारस्करगृह्यकल्पे ब्रह्मचारिणः समिदाधानार्थं नित्यतयाऽग्निधारणस्य विधानाभावात् । यत्तु "तस्मिन्नग्नौ पूर्ववदाधाय वाचं विसृजत" इति पारस्करगृह्यं(१) तत्तदहःसम्बन्धिन्यां सायंकालीनाग्निपरिचर्यायामुपनयनाग्निनियामकं वेदितव्यम् ।

अत्रायं विवेकः—अपत्नीकोच्छिन्नाग्न्यनग्निकानां त्रयाणां पाकपचनपूर्वकं वैश्वदेवार्थमग्न्याहरणं प्रवासिब्रह्मचारिणोस्तु पाकार्थमेव न वैश्वदेवार्थं ब्रह्मचारिणो वैश्वदेवानधिकारात् । प्रवासिनस्तु गृहे वैश्वदेवस्य कृतत्वेन पाकस्य वैश्वदेवविवर्जितत्वाभावे न चाभक्ष्यत्वाभावात्, एकस्मिन्नहनि वैश्वदेवद्वयनिषेधाच्च ।

'ग्रामादग्निमि'ति लौकिकं न पुनः संस्कृतं, 'पूर्ववदत्रतैर्हुत्वे'ति पूर्ववदित्यनेन गृह्योक्तं होममात्रं गृह्यते । स च होमः सायंप्रातःकालीनस्तन्त्रेण, 'पूर्ववद्बलिकर्मे'ति मणिकाभावादुदकुम्भसमीपे पर्जन्यादिभ्यस्त्रिभ्यो दानम् । 'अद्भ्य उदकुम्भ' इति गौतमाभिधानात् , 'उदपात्रसन्निधावि'त्यापस्तम्बवचनाच्च । शेषं निगदव्याख्यातम् ।

विवाहादूर्ध्वमावसथ्याधानात्पूर्वं पृष्ठोदिविविधानेनाभ्युदयिकपूर्वकमग्निं स्थापयित्वा नित्यहोमादिकं कुर्यादिति हरिहरः ।

---

( १ ) पा० गृ० २।५।९।

प्रसवोत्थानपरिशिष्टेऽपि—

अथ सम्राडिति होवाच भगवन् याज्ञवल्क्य उच्छिन्नाग्नीनां को विधिः स्यात् स होवाच देवपितृमनुष्याणां निर्वपणार्थं पाकश्रपणं प्र(सवा)वासार्थविधिं वक्ष्यामि विधानेनाग्निमुपसमाधाय ब्राह्मणानां न वृथापाको भवति केशान्तादूर्ध्वमपत्नीकस्योच्छिन्नाग्नेरनग्निकस्य आमादन्वग्निरित्यग्निमाहृत्य पृष्टो दिवीत्यधिष्ठाप्य त्रिभिश्च सावित्रैः प्रज्वाल्य तत्सवितुस्ताᳬ सवितुर्विश्वानि देव सवित रित्येवं प्रणीतो भवति पूर्ववदक्षतैर्हुत्वा पाकं श्रपयेत्तत्र वैश्वदेवं कुर्याद् ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृत इति पूर्ववद्बलिं हरेन्न वृथापाकं श्रपयेन्न वृथापाकमश्नीयात्तस्मादेवं न वृथापाको भवति गृहस्थो ब्रह्मचारी प्रवासी वा आमं भैक्ष्यमाहरेत्पक्त्वादि पिण्डपितृयज्ञा(न्तं)ग्रयणं चेति ।

## ( पृष्टोदिविविधानेनाग्न्याधानप्रयोगः । )

अथ प्रयोगः तत्र पूर्वोक्तशुभे मासे शुभे दिवसे आधाननक्षत्रे ( चैतत्कार्यम् । ) तत्र पूर्वदिवसे प्रायश्चित्तं कृत्वा नक्षत्रे पर्वदिवसे वा अन्वाधानं कार्यम् । (१) तत्साधनीभूतो गृह्याग्निर्यस्य नास्ति तस्येदं प्रकारान्तरमुच्यते । अत्र वृद्धावादौ न वैश्वदेवः । ततः प्राणानायम्य देशकालौ सङ्कीर्त्य वृथापाककरणजनित (दोष)

(१) 'गृहस्वामिनो मरणादेकादशाहे गृहज्येष्ठस्य पञ्चमहायज्ञाधिकारः सिद्धस्तत्साधनीभूतो" इति रु० क० ७२ पत्रपाठः ।

परिहारपुरस्सरपञ्चमहायज्ञसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पृष्ठोदिविविधानपरिशिष्टोक्तमग्न्याधानं करिष्ये । तदङ्गभूतगणपतिपूजनपूर्वकं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारापूजनं नान्दीश्राद्धं च करिष्ये । श्राद्धं समाप्य ततो मधुपर्कादि ( युतं ) ब्रह्मवरणं कुर्यात् । पूर्वोक्तं कुण्डं कृत्वा तत्र त्वरे पञ्चभूसंस्कारान् कृत्वा ब्राह्मणैः सह मङ्गलवाद्यैर्वेदघोषात्मकं शान्तिपाठं पठित्वा ब्राह्मणगृहाद्ग्रामाद्वा महानसाद्वा अन्वग्निरित्यनेनाग्निहरणम् । 'अन्वग्नि'रित्यस्य पुरोधास्त्रिष्टुबग्निरग्न्याहरणे विनियोगः । 'अन्वग्नि'रित्यनेनाग्निं गृहीत्वा 'पृष्ठो दिवी'ति कुत्सस्त्रिष्टुबग्निरग्निस्थापने विनियोगः । "ॐ पृष्ठो दिवी"त्यनेन कुण्डेऽग्निस्थापनम् । "समितम्"ति द्वयोः प्रजापतिरुष्णिगुपरिष्टाद्बृहत्यौ चित्योख्यावग्नी देवतेऽग्नुपस्थाने विनियोगः ।

ॐ समितꣳ० सङ्कल्पेथाम् । सं वां मनाꣳसि । महाव्याहृतीनां प्रजापति(र्यजु)र्गायत्र्युष्णिगनुष्टुबग्निर्वायुः सूर्यो'ताꣳ सवितु'रित्यस्य कण्वस्त्रिष्टुप् 'तत्सवितु'रित्यस्य विश्वामित्रगायत्री 'विश्वानि देव सवित'रित्यस्य श्यावाश्वगायत्री त्रयाणां सविता देवताग्निप्रज्वालने विनियोगः । ॐ भूर्भुवः स्वः ॐ ताꣳसवितुः, तत्सवितुः, विश्वानि देव इति तिसृभिर्ऋग्भिः प्रज्वालनम् । 'पुनस्त्वे'ति प्रजापतिस्त्रिष्टुबग्निसमिन्धने विनियोगः । ॐ पुनस्त्वा० । प्रज्वलितस्यापि पुनरिन्धनप्रक्षेपेण प्रदीप्तकरणं समिन्धनम् । एतावदेवमाधानम् । मणिकस्थाने उदकुम्भं निधायाथैतस्मिन्नग्नौ सायंप्रातर्होमस्तन्त्रेण (कार्यः) धारितश्चेत्प्रातर्होममात्रम् । ततस्तस्मिन्नग्नावान्वाहिकपाकश्रपणं, अन्न-

मुद्धृत्याभिघारणं, पञ्चमहायज्ञाश्च । तत्र विशेषः—अनुमतये स्वाहेत्यनन्तरं ॐ विश्वेभ्यो देवेभ्यः स्वाहा । इदं विश्वेभ्यो० । ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते० । इत्याहुतिद्वयमधिकं होतव्यम् । ततः पूर्ववद्बलिकर्म । अ(त)त्रोदकुम्भसमीपे पर्जन्यादिभ्यो दानमिह मणिकाभावादिति विशेषः, अन्यत्सर्वं पूर्ववत् । अत ऊर्ध्वमनेनैव विधिना(१) यावज्जीवं वर्तनीयम् । अन्ये त्वौपासनवत्तस्याग्नेर्यावज्जीवं धारणं कर्त्तव्यमित्याहुः । शान्ते चा(वा)ग्नौ अनेनैव विधिनाऽग्न्याहरणमिति । अस्मिन्नग्नौ पिण्डपितृयज्ञपक्षाद्याग्रयणादि कर्त्तव्यम् । श्रवणाकर्मादि तु न कर्त्तव्यम् ।

ब्रह्मचारिणोऽपि पितृश्राद्धादौ पाकोपस्थितौ एवमेव पाकश्रपणम् ।

गर्गोपाध्यायस्तु—यदि ब्रह्मचारिणोऽपि स्वकीयाग्निविच्छेदस्ततोऽनेनैव विधिनाग्न्याहरणादि समिदाधानान्तम् । अग्न्याहरणं तु समिदाधानार्थं पाकस्य तु निवृत्तिस्तस्येत्याह ।

तदयुक्तं, ब्रह्मचारिणः समिदाधानार्थं हि नित्यतयाग्निधारणस्य गृह्यकल्पे विधानाभावात् ।

एतत् पृष्टोदिविविधानम् । एवं कृते वृथापाको न भवति वृथापाकश्रपणं न कर्तव्यम् । वृथापाकाशनं च न कर्तव्यमिति ।

इति स्मार्तोल्लासे पृष्टोदिविविधानेनाग्न्याधानप्रयोगः ।

---

(१) 'विधिनाग्न्याहरणं यावज्जीवं' क० ख० पाठः

## ( यज्ञपार्श्वोक्तो निरग्निकर्तृकवैश्वदेवप्रयोगः । )

अथ यज्ञपार्श्वपरिशिष्टेऽनग्निकानां प्रति कात्यायनेन प्रकारान्तरमुक्तम्—

'अनाहिताग्निभिः कार्यो वैश्वदेवो यथाविधि ।
अभक्ष्यस्तु भवेत्पाको वैश्वदेवविवर्जितः'(१) ॥

इत्युक्त्वा—

'सभार्यो योऽगृहीताग्निर्विधुरः स्नातकोऽपि वा ।
व्याहृति(तो)भिः समस्ताभिर्व्यस्ताभिश्च ततः परम् ॥
हुत्वा तु शाकलैर्मन्त्रैः प्राजापत्यं ततः परम् ।
स्विष्टकृच्च हुनेदन्ते देवयज्ञोऽयमीरितः ॥
भूतयज्ञं ततः कुर्यात्पर्जन्यादित्रिकं विना ।
नित्यश्राद्धं निरग्नेः स्यात्साग्नेः पितृ[भ्यो]वलिः स्मृतः ॥
पितृयज्ञोऽयमाख्यातोऽनग्नेर्वा पैतृको बलिः ।
निर्णीऽय ब्रह्मयज्ञः स्यात् पञ्चमो मानुषो मत'' (२) इति ।

ज्योतिष्टोमे काष्ठशकलहोमे विनियुक्ता(३)''देवकृतस्यैनसोऽवयजनमसी''त्यादयो मन्त्राः शाकला उच्यन्ते । एतेनानग्निमन्तं प्रति वैश्वदेवे प्रकारद्वयमुक्तं पृष्टोदिविधिधानप्रसक्तोत्थानप-

---

( १ ) य० पा० प० १।८।

( २ ) य० पा० प० १।११—१४

( ३ ) "शाकलाधानं देवकृतस्ये ( शु० य० सं०८।१२ ) ति प्रतिमन्त्र''मिति सूत्रेण (का० श्रौ० १०।८।७) विनियुक्तेत्यर्थः ।

रिशिष्टाभ्यामुक्त एकः । यज्ञपार्श्वपरिशिष्टोक्तश्चापरः । एवं चोदाहृतपरिशिष्टानां स्वशाखीयत्वा "द्वैश्वदेवं तु कुर्वीत स्वशाखाविहितं तत" इति व्यासवाक्येन सह न विरोधः ।

## ( स्मृत्युक्ता वैश्वदेवकारिकाः । )

केचन स्मृतीनां सर्वशाखासाधारण्यात्स्मृत्युक्तमपि वैश्वदेवमनुष्ठेयं मन्यन्ते ।

अत्र वशिष्ठः—

"अनग्निकस्तु यो विप्रः सोऽन्नं व्याहृतिभिः स्वयम् ।
हुत्वा शाकलमन्त्रैश्च शिष्टं भूतबलिं हरेत्" ॥

शंखश्च—

"अन्नं व्याहृतिभिर्हुत्वा तथा मन्त्रैश्च शाकलैः ।
प्र(सु)विभज्य च भूतेभ्यस्ततोऽश्नीयादनग्निमानि"ति ॥

व्यासः—

"शाकलेन विधानेन जुहुयाल्लौकिकेऽनले ।
व्यस्ताभिर्व्याहृतीभिश्च समस्ताभिस्ततः परम् ॥
षड्भिर्देवकृतस्येति मन्त्रविद्भिर्यथाक्रमम् ।
प्राजापत्यं स्विष्टकृतं हुत्वैवं द्वादशाहुतीः ॥
ॐ कारपूर्वं स्वाहान्तं, त्यागः स्विष्टविधानतः ।
भुवि दर्भान् समास्तीर्य बलिकर्म समा(रभेत्)चरेत् ॥
विश्वेभ्यश्चैव भूतेभ्यः सर्वभूतेभ्य एव च ।
भूतानां पतये चेति नमस्कारेण शास्त्रवित् ॥

दद्याद्बलित्रयं चाग्रे पितृभ्यश्च स्वधा नमः ।
पात्रनिर्णेजनं वारि वायव्यां दिशि निक्षिपेत् ।।
उद्धृत्य षोडशग्रासमात्रमन्नं घृतोक्षितम् ।
इदमन्नं मनुष्येभ्यो हन्तेत्युक्त्वा समुत्सृजेत् ।।
गोत्रनामस्वधाकारैः पितृभ्यश्चापि शक्तितः"(१) ।

इति निरग्निकयज्ञपार्श्वोक्तवैश्वदेवप्रयोगः ।

---

## ( निरग्निकवैश्वदेवार्थं कुण्डकरणम् )

अथ कुण्डकरणमुच्यते । दीपिकायाम्—

"उत्सेधं द्व्यङ्गुलं प्रोक्तं विस्तारे द्वादशाङ्गुलम् ।
दैर्घ्यं चैव प्रकुर्वीत चतुरस्रं समंततः ।।
वैश्वदेवं ततः कुर्यात् कुण्डं खातविवर्जितम् ।
मेखलां वर्जयेच्चैव योनिं चैव विवर्जयेत्" ।।

अथवा—

"सप्ताङ्गुलप्रमाणेन कुर्याद्वै वर्तुलाकृतिः ।
मध्यशंकोः परि(री)णाहे कुर्यादेवं प्रयत्नतः ।।
न चूल्यां नायसे पात्रे न भूमौ न च खर्परे ।
वैश्वदेवं प्रकुर्वीत कुंडे वा स्थंडिलेऽपिवा" ।।

ग्रन्थान्तरे ताम्रादिकुण्डेऽपि वैश्वदेवकरणम् ( उक्तम् ) ।

---

( १ ) व्याससमृतिः ३ । २८—३४

## ( यज्ञपार्श्वोक्तवैश्वदेवप्रयोगः । )

ततस्ताम्रपात्रे वैश्वदेवान्नमुद्धृत्य घृतेनाभिघारणम् । "यद्देवा" (१)इति कूष्माण्डैभिस्तिसृभिर्ऋग्भिः क्षुद्रदृष्टिपतनजनितदोषपरिहारार्थमुद्धृतान्नप्रोक्षणम् । कृतकुशोपग्रहः पवित्रपाणी कर्ताऽऽचम्य त्रीन्प्राणायामान् कृत्वा देशकालयोःसङ्कीर्तनान्ते मम पञ्चसूनाजनितपापक्षयपूर्वकनित्यकर्मानुष्ठानसिद्धिद्वारा श्री परमेश्वरप्रीत्यर्थं यज्ञपार्श्वोक्तविधिना वैश्वदेवाख्यं कर्माहं करिष्ये । तत्र कुण्डे स्थंडिले वा पञ्चभूसंस्कारान् कृत्वा लौकिकाग्नेः स्थापनम् । (२)"चत्वारि शृङ्गे"ति ध्यानम्। (३)"एषो ह देव" इत्यावाहनम् । (४)"स नः पिते"ति पावकनाम्ने वैश्वानराय नम इति गन्धादिभिः पञ्चोपचारैरभ्यर्चनम्।

---

( १ ) ॐ यद्देवा देवहेडनं देवासश्चकृमा व्वयम् । अग्निर्मा तस्मादेनसो व्विश्वान् मुञ्चत्वᳬंहसः । यदि दिवा यदि नक्तमेनाᳬंसि चकृमा व्वयम् । व्वायुर्मा तस्मादेनसो व्विश्वान् मुञ्चत्वᳬं हसः। यदि जाग्रद्यदि स्वप्न एनाᳬंसि चकृमा व्वयम् । सूर्यो मा तस्मादेनसो व्विश्वान् मुञ्चन्त्वᳬं हसः ( शु०य०सं०२०।१४--१६ ) ।

( २ ) चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां ३ ॥ आविवेश ( शु०य०सं०१७।९१। ) ।

( ३ ) ॐ एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः। स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतो मुखः ( शु०य०सं०३२।४ ) ।

( ४ ) ॐ स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ( शु०य०सं० ३।२४) ।

ॐ मुखं यः सर्व(देवानां)भूतानां हव्यभुक् कव्यभुक् तथा ॥
पितॄणां च नमस्तस्मै विष्णवे पावकात्मने ।

इति नमस्कृत्य प्रदक्षिणमग्नेः पर्युक्षणम् । इतरथावृत्तिः । दक्षिणं जान्वाच्य देवतीर्थेन सुसमिद्धेऽग्नौ जुहुयात् । ॐ भूर्भुवः स्वः स्वाहा । इदं प्रजापतये । ॐ भूः स्वाहा । इदमग्नये । ॐ भुवः स्वाहा । इदं वायवे । ॐ स्वः स्वाहा । इदं सूर्याय । ॐ देवकृतस्यैनसोऽवयजनमसि स्वाहा । ॐमनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । ॐ पितृकृतस्यैनसोऽवयजनमसि स्वाहा । ॐ आत्मकृतस्यैनसोऽवयजनमसि स्वाहा । ॐ एनस एनसोऽवयजनमसि स्वाहा। ॐ यच्चाहमेनो विद्वांश्चकार यच्चाविद्वांस्तस्य सर्वस्यैनसोऽवयजनमसि स्वाहा । इदमग्नये इति षण्णां त्यागः । ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम । ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम । इत्येवं द्वादशाहुतिको होमो देवयज्ञः ।

अथभूतयज्ञः । तत्र पर्जन्यादित्रिकवर्जं भूमौ बलिहरणं पूर्ववत् । पितृयज्ञादिसर्वं पूर्ववत् ।

इति यज्ञपार्श्वोक्तो वैश्वदेवः ।

---

## ( स्मृत्युक्तो वैश्वदेवप्रयोगः )

अथवा स्मृत्युक्तं वैश्वदेवं कुर्यात् । तत्र विशेषः । ॐ भूः स्वाहा । ॐ भुवः स्वाहा । ॐ स्वः स्वाहा । इति महाव्याहृति-

भिर्व्यस्ताभिर्हुत्वा ॐ भूर्भुवः स्वः स्वाहेति समस्ताभिर्जुहुयात् । ततो देवकृतस्यैनसोऽवयजनमसि स्वाहेत्याद्याः स्विष्टकृदन्ता अष्टावाहुतीर्जुहुयात् । ॐ धात्रे नमः । ॐ विधात्रे नमः । इति बलिद्वयं द्वारदेशशाखामू[लदेशे]ले दत्वाग्नेः पश्चादुपविश्य ॐ विश्वेभ्यो देवेभ्यो नमः । ॐ सर्वेभ्यो भूतेभ्यो नमः । ॐ भूतानां पतये नमः । इति बलित्रयं प्राक्संस्थमुदक्संस्थं वा दद्यात् । एवं पञ्चबलीन् दद्यादिति देवयज्ञभूतयज्ञ(यो)र्विशेषः । अन्यत्पितृयज्ञादिसर्वं यज्ञपार्श्वोक्तवैश्वदेववत् ।

इति स्मृत्युक्तो वैश्वदेवः ।

---

## ( निरग्निकवैश्वदेवनिर्णयः । )

अथ निरग्निकवैश्वदेवनिर्णयः । नित्यश्राद्धे विशेषः। हेमाद्रौ-

"एकमप्याशयेद्विप्रं षरणामप्यन्वहं गृही" ।

अपीत्यनुकल्पः । प्रचेताः—

"नामन्त्रणं न होमं च नाह्वानं न विसर्जनम् ।
न पिण्डदानं विकिरं न दद्यादत्र दक्षिणाम् ।
अनिर्दिश्य भोजयित्वा किंचिद्दत्वा विसर्जयेत्" ॥

इति तेनैवोक्तेर्दक्षिणाविकल्पः । यत्तु काशीखण्डे—

"नित्यश्राद्धं दैवहीनं नियमादिविवर्जितम् ।
दक्षिणारहितं चैव दातृभोक्तृविवर्जितम्" ॥ इति ।

तद्विप्राऽभावपरम् ।

भविष्ये—

"आवाहनं स्वधाकारं पिण्डाग्नौकरणादिकम् ।
ब्रह्मचर्यादिनियमा विश्वदेवा न चैव हि ॥
दातृणामथ भोक्तृणां नियमो न च विद्यते" ॥ इति ।
"होमान्नदानरहितं भोक्तव्यं न कथंचन ।
अविभक्तेषु संसृष्टेष्वेकेनापि कृतं च यत् ॥
देवयज्ञादि सर्वार्थं लौकिकाग्नौ हुतं यदि ।
इक्षुरापः पयो मूलं तांबूलं फलमौषधम् ।
भक्षयित्वापि कर्तव्याः स्नानसन्ध्यादिकाःक्रियाः" ॥

इति गदाधरभाष्योक्तेः । विष्णुः—

"अभावादग्निहोत्रस्य आवसथ्यात्तु बाह्यतः ।
यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते" ॥

अङ्गिरा अपि—

"शालाग्नौ तु पचेदन्नं लौकिके वापि नित्यशः ।
यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते" ॥ इति ।
"यदर्थमुद्धृतो ह्यग्निः कृतश्चार्थो यथाविधि ।
कृतकर्मापवृत्तस्तु हुतोऽग्निर्लौकिकः स्मृतः" ॥

इति वचनात्पारिभाषिक एवात्र लौकिको न पुनर्ग्रामाग्निः । "अपवृत्तकर्मा लौकिकोऽर्थसंयोगादि"ति कात्यायनेन (१) त-

(१) का० श्रौ० १।३।२८।

स्मिन्नेवाग्नौ लौकिकशब्दप्रयोगात् । अन्यत्र तु (१)"ग्रामाग्निना चेदि"ति ।(२) "तूष्णी ग्रामाग्निनेतरमि"ति । "गार्हपत्यानुगते ग्रामाग्निमाहृत्ये"(३)ति । "अन्वग्निरिति ग्रामाग्निमाहृत्या"(४)दौ ग्रामाग्निपदप्रयोगाच्च ।

अचारादर्शे मदनपारिजाते च शातातपः—

"वैदिके लौकिके वापि हुतोच्छिष्टे जले क्षितौ ।
आहृत्योन्मृज्य जुहुयात्पञ्चसूनापनुत्तये" ॥ इति ।

वैदिके आवसथ्येऽग्नौ तदभावे हुतोच्छिष्टे=अन्येनान्यहोमं कृत्वा त्यक्ते तदभावे लौकिके= ग्रामाग्नौ, पात्रान्तरकरणमाहरणम् । गृह्याग्नेस्त्वग्न्युद्बोधनमाहरणम् । उन्मार्जनं भस्मापाकरणम् । मनुः—

"पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥
तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः ।
पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्" (५) ॥

कीटादीनां ध्मायनेन [ध्मापणेन] चुल्ली, पेषणेन पतितप्रा-

---

(१) का० श्रौ० २५।४।३७।
(२) पा० गृ० ३।१०।१२
(३) का० श्रौ० ४।८।१०
(४) कात्यायनपृष्टादिविविधानपरि० ॥
(५) मनुस्मृतिः ३।६८-६९ ॥

णिवधादिना पेषणी, क्षेपणादिना मार्जनी, अवहननेन कण्डनी, सकीटजलाहरणेनोदकुम्भः। एताः गृहस्थस्य पञ्च सूना= प्राणिवध-स्थानं तत्सदृशवधतुल्य[जन्य] दोषहेतुत्वात्। अतएवैतान् वाहय-न्=व्यापारयन् सूनादोषैः संबध्यत इत्यर्थः। उपस्करः समार्जनी भाण्डकुण्डा[म्भा]दिगृहोपस्करणमित्येके। 'तासामि'त्यादिना एतत्पापक्षयार्थं पञ्चमहायज्ञा इत्युक्तम्। तथा स एव—

"पञ्चैतान्यो महायज्ञान्न हापयति शक्तितः।
स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते" (१)॥ इति।

एतच्चार्थवादमात्रम्।

"ततः पञ्चमहायज्ञान् कुर्यादहरहर्द्विजः"।

इति सुमन्तुवाक्ये,

"अहरहर्भूतेभ्यो बलिं हरेदि"ति(२)शतपथश्रुतौ चाह-रहरिति वीप्सया तेषां नित्यत्वावगमात्।

शङ्खोऽपि—

"पञ्चयज्ञविधानं च गृही नित्यं न हापयेदि"ति।

अथवा अर्थवादात्सूनाजनितपापक्षयोऽपि फलम्। एवं च—

"स्वर्गापवर्गयोः सिद्धिः पाकयज्ञैः प्रचक्षत"—

इति व्यासवाक्यादपि फलान्तरं बोध्यम्।

---

(१) मनुस्मृ० ३।७१।
(२) श० ब्रा० ११।५।६।२।

प्रत्येकमपि फलमाह हारीतः—

"यद्देवेभ्यो जुहोति देवलोकं तेनाभिजयति, यत् पितृभ्यः पितृलोकं तेन, यत्स्वाध्यायमधीते ऋषिलोकं तेन, यद्भूतेभ्यो बलिं हरति भूतलोकं तेन जयति"।

एतेन पुरुषार्थत्वमुक्तं भवति (१) वैश्वदेवस्येति। ततो वैश्वदेवस्यान्यस्य घृतेनाभिघारणादि।

तदुक्तं मदनपारिजाते कात्यायनेन—

"उद्धृतं हविरासिच्य हविष्येण घृतादिना।

---

(१) मनुरपि वैश्वदेवस्य पुरुषार्थत्वमेवाह—

"वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत्।

तस्मा (स्याप्य) अन्नं यथाशक्ति प्रदद्यान्न बलिं हरे"दिति

(म० स्मृ० ३।१०८)।

वैश्वदेवानन्तरमतिथिपूजायां कृतायां द्वितीयोऽतिथिर्यद्यागच्छति अन्नं च पक्वं नास्ति तदा पुनः पाकं कृत्वा तस्मै दद्यान्न बलिं हरेद्वैश्वदेवं न कुर्यादित्यर्थः। यद्यन्नसंस्कारार्थत्वं वैश्वदेवस्य स्यात्तदा पुनः करणनिषेधो न युज्यत इति। मिताक्षराया (या० स्मृ० १।१०३।) मप्येवम्। अतश्च पाकसंस्कारार्थत्वं निरस्तम्। पाकसंस्कारार्थत्वे तु पाकाभावे वैश्वदेवाभावप्रसङ्गात्। केचित्तु—

"यस्य चाग्नौ न क्रियते यस्य चाग्रं न दीयते।

अभोज्यं तद्भवेदन्नं भुक्त्वा तूपवसेदहः" ॥

इति मिताक्षरायां लिखितेन वाक्येन वैश्वदेवाभावेऽन्नस्याभोज्यत्वाभिधानादन्नसंस्कारार्थतापि प्रतीयते, तेन वैश्वदेवस्योभयार्थत्वं स्विष्टकृद्व (जै० ४।१।७) देकस्यैव प्रधानकर्मत्वं गुणकर्मत्वं चांशभेदेनाविरुद्धमित्याहुः। तेनादृष्टार्थविहितस्यैव पाकस्य वैश्वदेवे विनियो

स्वशाखाविधिना हुत्वा तच्छेषेण बलिं हरेत्" ॥ इति ।

हविष्येण घृतादिना उद्धृतं हविरासिच्य तेन हविषा जुहुयादित्यर्थः । घृताभावे दध्यादियुक्तं हविर्जुहुयात् ।

तथा च व्यासः—

"जुहुयात्सर्पिषाभ्यक्तं तैलक्षारविवर्जितम् ।
दध्यक्तं पयसाभ्यक्तं तदभावेऽम्भसापि वा" ॥ इति ।

हविष्याभावे चतुर्विंशतिमते—

"अलाभे येन केनापि फलशाकोदकादिभिः ।
पयोदधिघृतैः कुर्याद्वैश्वदेवं स्रुवेण तु ।
हस्तेनान्नादिभिः कुर्यादद्भिरञ्जलिना जले" ॥ इति ।

अत्रापरो विशेषः परिशिष्टे—

"शाकं वा यदि वा पत्रं मूलं वा यदि वा फलम् ।
सङ्कल्पयेद्यदाहारे(रं) तेनाग्नौ जुहुयादपि" ॥ इति ।

---

गः । "वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुया" ( पा० गृ० २।९।२ ) दिति । वैश्वदेवादित्यन्नं व्यपदिश्यते । विश्वेदेवदेवताकबलिसम्बन्धात् । यद्यपि देवतान्तरमप्युक्तमस्ति तथाप्येकदेशेन व्यवहारः । अत एव होमेऽप्यस्मिन्वैश्वदेवपदम् । "अग्निर्धन्वन्तरिर्विश्वेदेवाः प्रजापतिः स्विष्टकृदि" (गौ० ध० सू० ५।११) ति गौतमादिकल्पे होमेऽपि विश्वेदेवसम्बन्धात् । "वैश्वदेवस्याग्नौ जुहोत्यग्नये स्वाहे"ति सूत्रे तु पुरोडाशकपालेनेति (जै० ४।१।११।) वद्वैश्वदेवार्हस्य पाकस्य विनियोगान्तरमिति ।

पयःप्रभृतिद्रव्याणां होमः स्रुवेणेत्युक्तम् (१) । चर्वादिकठिनद्रव्याणां तु विशेषोऽभिहितः परिशिष्टे—

"उत्तानेन तु हस्तेन अङ्गुष्ठाग्रेण पीडितम् ।
संहताङ्गुलि(भिर्यस्तु)पाणिस्तु वाग्यतो जुहुयाद्धविः" ।। इति ।।

हविष्येष्वपि मुख्यद्र(ह)व्यमाह कात्यायनः—

"हविष्ये तु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।
माषकोद्रवगौरादीन् सर्वालाभेऽपि वर्जयेदि"ति ।।

गौराः गौरसर्षपाः । आदिशब्देन कोद्रवचणकमाषमसूरकुलित्थवर्ज्यमिति शङ्खलिखितोक्तं परिगृह्यते ।

आपस्तम्बः—

"न क्षारलवणहोमो विद्यते तथावरान्नसंस्पृष्टस्य हविष्यस्य होम उदीचीनमुष्णां भस्मापोह्य तस्मिञ्जुहुयात्तद्धुतमहुतं चाग्नौ भवती"ति ।

क्षारलवणपरान्नसंसृष्टेनाहविष्येणाग्नौ होमो न कार्यः । अपि

---

(१) पूर्वमीमांसाया (१।४।सू०३०) मपि आज्यादिषु स्रुवादीनां व्यवस्था सिद्धान्तिता । तथा हि संक्षेपः—

स्रुवेणाथ स्वधितिना हस्तेनावद्यतीत्यमी ।
आज्ये मांसे पुरोडाशे संकीर्णा वा व्यवथिताः ।
व्यवस्थापकराहित्यात्स्रुवाद्या अव्यवस्थिताः ।
व्यवस्थापकताशक्तेस्तद्वशेन व्यवस्थितिः ।

(न्या० मा० १।४–५३–५४) इति ।

(२) आ० धर्मसूत्र ६।१५।।१४–१६ ।

च तूष्णीं भस्माग्न्यायतनादुत्तरतोऽपोह्यास्मिन् होतव्यम् । उष्णं भस्मेत्यङ्गारमिश्रितं भस्मेत्यर्थः । अतएव बौधायनः—

'अङ्गारान् भस्ममिश्रांस्तु उद्धृत्योत्तरतो [ऽनलात्] नयेत् ।
जुहुयाद्वैश्वदेवं तु यदि क्षारादि[मिश्रितम्] वर्जितम्" ॥

तथा—

"परोक्षमन्नमसंस्कृतमग्नावधिश्रित्याद्भिः प्रोक्षेत्तदेव पवित्रमित्याचक्षत" इत्यादि । अधिश्रयणं तु पुनरग्नेरुपरिस्थापनमात्रमन्नसहितस्य वैश्वदेपात्रस्य । अधिश्रित्य संस्कृतं कृत्वा प्रोक्षेदित्यन्वयः ।

इति पुष्करपल्लीस्थशिवप्रसादपाठककृते स्मार्त्तोल्लासे साग्निकनिरग्निकवैश्वदेवनिर्णयप्रयोगः समाप्तः ।

---

## ( अथ विधुरोपासनम् । )

अथ विधुरोपासनं लिख्यते । ततः पूर्वोक्त ( २८१ पत्रे ) प्रसवोत्थानपरिशिष्टे अपत्नीकशब्दे(द्वस्य)न मृतपत्नीकः स च विधुरः=अनाश्रमी ।

एतदुक्तम्—

"अनाऽश्रमी न तिष्ठे(त्तु)त क्षणमेकं पितामह ।
तिष्ठन्भवेद्द्विजो व्रात्यः प्रायश्चित्ती भवेत्तु सः ॥

प्रायश्चित्तमाह हारीतः—

अनाश्रमी संवत्सरं प्राजापत्यं चरित्वा आश्रममुपेयात् । द्वितीये कृच्छ्रं, तृतीये कृच्छ्रातिकृच्छ्रं, अत ऊर्ध्वं चान्द्रायणमिति ।

प्रायश्चित्तमुक्तावल्यां सङ्ग्रहे—

"तपसा ब्राह्मणो जातः कर्मिष्ठश्च द्विजोत्तमः ।
त्रिप्रियो(?)ब्राह्मणः शुद्धो कर्मदाने न(?)कर्मसु ॥
अना(त्रिना)श्रमी द्विजस्तस्य सुमुखं नावलोकयेत् ।
तं त्य(जित्वा)जेत्तु प्रयत्नेन श्राद्धे दाने च कर्मसु ॥
मृतस्य तस्य नाशौचं दहने नोदकक्रियाम्" ॥ इति ।

तदुक्तं ( तथा च ) गृह्यकारिकायाम्—

"कुलटानामग्रजन्मगर्भघ्नीनां च योषिताम् ।
गामिनीनां हीनजातौ तथाऽनाश्रमिणामपि ॥
अधिकारे मृतौ तेषां सद्यः शौचं विधीयते ।
न कुर्याद्दहनं तेषां प्रायश्चित्तमतोऽन्यथा ॥
न कुर्याद्दहनाशौचोदकमेषां कृतं यदि ।
नोपतिष्ठति तत्सर्वमन्तरिक्षे विनश्यति" ॥

त्रिंशच्छ्लोकेऽपि—

"नाशौचं चौराश्रमरहितसुरापेय(१)मि"त्यादि ।

---

( १ ) नाशौचा ज्ञातयः स्युः पतितपतिसुतब्रह्मविड्घातिनीषु
दोषात्पाखण्डचौराश्रमरहितसुरापेयहीनोपगासु ।
सन्दर्पात्सर्पविप्रद्वितिपपशुदिवाकीर्तिकाद्यैर्हतेषु
स्वेच्छापूर्वं च शस्त्रज्वलनजलविषानाशकाद्यैर्मृतेषु ॥
इति त्रिंशच्छ्लोकी ( १८ श्लो० ) पाठः ।

अतएवावश्यमेव विधुरोपासनं कर्तव्यम् । तदुक्तम्—

"आश्वलायनमाचार्यमधिगम्य महर्षयः ।
प्रतिपूज्य यथाचारमिदं वचनमब्रुवन् ॥
भगवन् विधुराणां हि धर्मं नो वक्तुमर्हसि ।
विवाहे ह्य(ह्स्या)समर्थस्य विधुरस्य क्रियाः कथम् ॥
श्राद्धानि पञ्चयज्ञाश्च कार्या नैमित्तिकाः क्रियाः ।
अनेनैव (यस्मिन्नेव) विधानेन गृहस्थसदृशो भवेत् ॥

आश्वलायन उवाच ।

कात्यायन-भरद्वाज-धौम्य-बौधायनादिभिः ।
यदुक्तं विधुराणां हि तदेतत्कथयामि वः ॥
चन्द्रानुकूलदिवसे स्नात्वाऽऽगत्य द्विजैः सह ।
पुण्याहं वाचयित्वाऽथ ततश्चैव महानसात् ॥
अग्निमाहृत्य विधिवत् स्थंडिले प्रणिधाय च ।
सङ्कल्प्य विधुरस्याग्निं पुनः संधानमेव च ॥
त्रिभिः सावित्रैः प्रज्वाल्य पुनस्त्वेति समिन्धनम् ।
सायंप्रातश्च जुहुयादौपासनमतः परम् ॥
दर्शश्च पौर्णमासश्च नित्येष्ट्याग्रयणे तथा ।
श्राद्धानि पञ्चयज्ञांश्च तस्मिन्नग्नौ समाचरेत् ॥
एवं कृते विधुरेण गृहस्थसदृशो भवेत् ।
अनाश्रमित्वदोषो हि नास्तीत्याहाश्वलायनः ॥
दानव्रतेषु होमेषु तीर्थेषु श्राद्धकर्मसु ।
विधुरोऽपि सदा पूज्यो योऽग्निवेदसमन्वितः ॥

तस्मात्सर्वप्रयत्नेन वह्निं परिचरेत्स्वयम्" ।

विष्णुः—

"मृतायामपि भार्यायां वैदिकं कर्म न त्यजेत् ॥
उपाधिनापि तत्कर्म यावज्जीवं समाचरेत् ।
अनेनैव विधानेन विधुरोपासनं भवेत् ॥
औपास(नेत्व)नस्याकरणे प्रायश्चित्तं विधीयते ।
औपासनं विना दोषो न स्पृशेद्विधुरं ततः ॥
अत्राग्निहोत्रस्य फलं तत्फलं विधुरस्य च ।
अग्ने नय जपेत्सूक्तं पञ्चवारं दिने दिने" ॥

ग्रन्थान्तरे कारिका—

"उद्धृत्य वह्निं प्रणवेन चादावन्वग्निरित्याहरयेत्पुरस्तात् ।
निधाय पृष्ठो दिवि मन्त्रकेन ततश्च होमं शकलैश्च कुर्युः ॥
ताꣳसवितुस्तत्सवितुर्वरेण्यं विश्वानि देवेति समिद्धमन्त्राः ।
नारोपणं नाप्यवरोहणं च उत्पत्तिमेतद्विधुरस्य तस्य ॥
नैमित्तिकं नित्यमथापि काम्यं तत्रैव कुर्याद्विधुरः सदैवे"ति ।

## ( विधुरोपासनप्रयोगः )

अथ प्रयोगः । तत्रादावनाश्रमदोषपरिहारार्थं सर्वप्रायश्चित्तं कृत्वा तदुत्तरमतीतसंवत्सरसङ्ख्याकान् प्राजापत्यादि यथाशक्तिप्रत्याम्नायत्वेन करिष्ये ।

ततः पूर्वोक्ते शुभे मासे प्रधाननक्षत्रे चन्द्रानुकूले दिवसेऽग्न्याधानम् । ततः प्राणानायम्य देशकालौ सङ्कीर्त्य गार्हस्थ्य-

सदृशसर्वकर्मयोग्यताप्राप्तिपुरस्सरश्रौतस्मार्तकर्मानुष्ठानफलप्राप्त्यर्थं अनाश्रमदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं च प्रसवोत्थानपरिशिष्टोक्तविधुरोपासनं करिष्ये। तदङ्गभूतं गणपतिपूजनपूर्वकं स्वस्तिपुण्याहवाचनं मातृपूजनं वसोर्धारापूजनं वृद्धिश्राद्धं च करिष्ये। श्राद्धं समाप्य ततो ब्रह्मवरणादि मधुपर्कान्तं पूजयेत्। ततः पूर्वोक्तस्थरे पञ्च भूसंस्कारान् कृत्वा ब्राह्मणैः सह शान्तिपाठं पठन् महानसादन्वग्निरित्यनेनाग्निहरणम्। 'अन्वग्निरि'त्यस्य पुरोधास्त्रिष्टुबग्निरग्न्याहरणे विनियोगः। ॐ अन्वग्निः०। ततोऽग्निं गृहीत्वा कुण्डसमीपमानीय पश्चादुपविश्य 'पृष्टो दिवी'ति कुत्सस्त्रिष्टुबग्निरग्निस्थापने विनियोगः। 'पृष्टो दिवि' इति मन्त्रेण स्थापनम्। 'समितमि'ति द्वयोः प्रजापतिरुष्णिक् बृहत्यावग्निस्थापने विनियोगः। ॐ समितꣳ०। ॐ सं वाम्मनाꣳसि०। इति द्वाभ्यामग्न्युपस्थानम्। ततो महाव्याहृतीनां प्रजापतिर्गायत्र्युष्णिगनुष्टुबग्निर्वायुःसूर्यस्ताꣳसवितुरित्यस्य कण्वस्त्रिष्टुप् तत्सवितुरिति विश्वामित्रगायत्री, विश्वानि देव सवितरित्यस्य श्यावाश्वगायत्री त्रयाणां सविता देवता अग्निप्रज्वालने विनियोगः।

'ॐ भूर्भुवः स्वः ताꣳसवितुः०। ॐ तत्सवितुः०। ॐ विश्वानि देव' इत्यनेनाग्निप्रज्वालनम्। 'पुनस्त्वे'ति प्रजापतिस्त्रिष्टुबग्निसमिन्धने वि०। ॐ पुनस्त्वा प्रज्वलितस्यापि पुनरिन्धनप्रक्षेपेण प्रदीप्तकरणं समिन्धनम्। एतावदाधानं समाप्तम्।

तस्मिन्नग्नौ सायंप्रातर्होमस्तन्त्रेण, धारितश्चेत् प्रातर्होममात्रम्। ततस्तस्मिन्नग्नौ चान्वाहिकपाकश्रपणं अन्नमुद्धृत्याभिघारणं पञ्चमहायज्ञा-

श्च । तत्र विशेषः अनुमतये स्वाहेत्यनन्तरं ॐ विश्वेभ्यो देवेभ्यः स्वाहा । इदं विश्वेभ्यो देवेभ्यो न मम । ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम । इत्याहुतिद्वयमधिकं होतव्यम् । ततः पूर्ववद्बलिकर्म । तत्रोदकुम्भसमीपे पर्जन्यादिभ्योदानम् । मणिकस्थाने उदकुम्भस्थापनमिह मणिकाभावादिति विशेषः । अन्यत्सर्वं पूर्ववत् । अत ऊर्ध्वमनेनैव विधिना यावज्जीवं वर्तनीयम् ।

अन्ये तु—औपासनवत्तस्याग्नेर्यावज्जीवं धारणं कर्तव्यमित्याहुः । शान्ते चाग्नावनेनैव विधिनाग्न्याहरणमिति । अस्मिन्नग्नौ पिण्डपितृयज्ञपक्षाद्याग्रयणादि कर्तव्यम् । श्रवणाकर्मादि तु न कर्तव्यम् । एवं कृते वृथापाको न भवति । वृथापाकश्रपणं न कर्तव्यं वृथापाकाशनं च न कर्तव्यमिति । विधुरोपासनसाङ्गतासिद्ध्यर्थं यथाशक्ति दक्षिणां दद्यात् । यथाशक्ति ब्राह्मणान् भोजयिष्ये । 'यस्य स्मृत्ये'ति । क्षमस्व । अनेन विधुरोपासनाख्येन कर्मणा भगवान् श्रीयज्ञरूपी परमेश्वरः प्रीयताम् ।

## ( विधुरस्य प्रवासविधिः । )

अथ विधुरस्य प्रवासोपस्थिते । तदा देशकालौ सङ्कीर्त्य प्रवासनिमित्तमग्निसमारोपं करिष्ये । ततः प्रातःकाले पक्षसमस्यहोमं कृत्वाग्निं प्रज्वाल्य समिधं गृहीत्वा "अयं ते योनि" रिति प्रतपेत् । सकृन्मन्त्रेण द्विस्तूष्णीम् । आहरणापक्षश्चेत् समिधं तथैव प्रक्षिपेत् । ततः यजमानो गृहान्निष्क्रम्य ग्रामान्तरं गत्वा पञ्चभूसंस्कारपूर्वकलौकिकाग्निस्थापनम् । तस्मिन् "ॐप्रत्यवरोह जातवेदः

पुनस्त्वं देवेभ्यो हव्यं वहतु प्रजानन् । प्रजां पुष्टिं रयिमस्मासु धेहि यथा भव यजमानाय शंयो" रित्यनेनाग्नौ समिद्धोमं कृत्वा तस्मिन्पाकश्रपणं पञ्चमहायज्ञादि च कुर्यात् । अथवा पर्वदिवसे एतदग्नि-(एवमग्नि) सिद्धं कृत्वाग्निधारणं कर्तव्यम् । प्रातः प्रतिपदि होमानन्तरं स्थालीपाकं विधाय पुनः समस्य होमं कृत्वा पुनः समित्समारोपं कृत्वा समिधं गृहीत्वा गच्छेत् । ततः प्रत्यागत्य तूष्णीं गृहं प्रविश्याग्निं प्रतिष्ठाप्य प्रादुष्करणप्रत्यवरोहेति समिधमाधाय तदग्नेः प्रज्वालनं कुर्यात् । पूर्ववद्धोमादिकुर्यात् । केचिन्मते विधुरोपासने समारोपणं नास्ति ।

इति स्मार्तोल्लासे विधुरोपासनप्रयोगः समाप्तः ।

## ( अग्निसमारोपविधिः )

अथानाहिताग्नेः सभार्यस्य प्रवासप्रसक्तोऽग्निसमारोपविधिः ।

प्रातर्होमानन्तरमरणिद्वय 'मयं ते योनि'रिति मन्त्रेणावसथ्ये प्रतपतीत्यरणिपक्षे समारोपः ।

आहरणपक्षे तु 'अयं ते योनि'रिति मन्त्रेणाश्वत्थसमिधमावसथ्ये प्रतपति । अथवा "या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानमच्छा वसूनि कृण्वन्नस्मेनर्या पुरूणि यज्ञो भूत्वा यज्ञमासीद स्वां योनिं जातवेदो भुव आजायमानः सक्षय एही"ति मन्त्रेण पाणी प्रतप्यात्मनि समारोपयेत् । तत्र प्रादुष्करणकाले अरणिसमारोपे अरणी निर्मथ्य "प्रत्यवरोहे"ति मन्त्रेण खरेऽग्निस्थापनम् ।

अश्वत्थसमित्समारोपणे ैश्यादिगृहादग्निमाहृत्य खरे पञ्चाग्न्यर्थान् संस्कारान् कृत्वाऽग्निं स्थापयित्वा 'प्रत्यवरोहे'ति मन्त्रेण तां समिधमग्नौ निदध्यात् । आत्मसमारोपपक्षे सर्वदा स्पृश्यस्पर्शनं जले निमज्जनं स्नानं स्त्रीगमनं चाकुर्वन्मूत्रपुरीषोत्सर्गे शौचमकृत्वा चिरकालमतिष्ठंश्च होमकाले आत्मसमारूढमग्निमुच्छ्वासरूपेण प्रत्यवरोहेति मन्त्रेण लौकिकाग्नौ निदध्यात् । एवं यथाधिकारमग्निं प्रतिष्ठाप्य होमं कुर्यात् । इदं समारोपणं द्वादशरात्रपर्यन्तमेव कुर्यादिति प्रयोगरत्ने । कातीयानां त्वरणिसमारोपः श्रौते दृष्टस्तद्वत्स्मार्तेऽपि कार्य उक्तत्वादिति शिष्टाः । समित्समारोपणेऽपि "अयं ते योनिरिति मन्त्रेण समारोप्य प्रादुष्करणकाले लौकिकमग्निं संस्थाप्य तत्र तूष्णीं समिधमादध्यादिति वृद्धाः । वस्तुतस्तु कातीयानामपि समित्समारोपः शाखान्तरोक्त एव भवति । स्वशाखायां समित्समारोपाभावादिति गदाधरभाष्य उक्तम् ।

इति समारोपविधिः ।

---

## ( अग्नित्यागप्रायश्चित्तम् । )

अथ पुनराधानप्रयोगः । तत्राग्नित्यागप्रायश्चित्तम् । स च त्यागस्त्रिविधः, प्रमादादिना एकः, आलस्येन बुद्धिपूर्वको द्वितीयः, नास्तिक्येन तृतीयः, त्रिष्वपि त्यागेषु प्रत्येकं प्रायश्चित्तं भिन्नम् । तत्र प्रमादादग्निनाशे रात्रित्रये प्राणायामशतं विंशतिरात्रे एकदि-

नोपवासः । मासद्वये त्रिरात्रोपवासः । अब्दे प्राजापत्यकृच्छ्रः । एवं त्यागकालानुसारेण प्रायश्चित्तं कुर्यात् ।

आलस्यादिना बुद्धिपूर्वकमग्नित्यागे तु द्वादशाहपर्यन्तं त्रिरात्रमुपवासः । मासपर्यन्तं द्वादशरात्रमुपवासः । अब्दपर्यन्तं मासं पयोव्रतम् । द्विवर्षपर्यन्तं चान्द्रायणम् । त्र्यब्दपर्यन्तं चान्द्रायणं सोमायनं च, एतदूर्ध्वं अब्दकृच्छ्रं धनिनो गोदानं चेति ।

प्रयोगपारिजाते स्मृत्यर्थसारे तु—द्वादशाहातिक्रमे त्र्यहमुपवासः । मासातिक्रमे द्वादशाहमुपवासः । संवत्सरातिक्रमे मासमुपवासः पयोभक्षणं चेति विशेषः ।

अथ नास्तिक्यादिभ्रष्टस्याग्नेः प्रायश्चित्तम् । तद्यथा द्वादशरात्रिपर्यन्तं यथाशक्ति सुवर्णदानम् । मासद्वयपर्यन्तं कृच्छ्रं मासचतुष्टयपर्यन्तमतिकृच्छ्रम् । षण्मासपर्यन्तं पराकः । ततोऽब्दपर्यन्तं मासं पयोव्रतम् । अब्दे पूर्णे त्रैमासिकम् । ततः प्रतिवर्षं मासिकावृत्तिरिति । एवं कालविलम्बे सङ्कल्पपूर्वकं प्रायश्चित्तं कार्यं यत्र त्वग्निविच्छेदनिमित्तेन केनचिदग्निविच्छेदः कालविलम्बश्च नास्ति तत्राकृत्वैव प्रायश्चित्तं पुनराधानं कार्यम् । प्राजपत्यानुकल्पस्तु पूर्वोक्तः ।

इत्यग्नित्यागप्रायश्चित्तम् ।

## ( अग्नित्यागप्रायश्चित्तप्रयोगः )

अथ प्रयोगः । कर्ता नित्यक्रियां विधाय देशकालौ सङ्कीर्त्यामुकसमयमारभ्याद्यदिनपर्यन्तमावसथ्याग्निविच्छेदजनितप्रत्यवायप-

रिहारार्थं एतावत्प्रायश्चित्तममुकप्रत्याम्नायत्वेन करिष्ये, इति सङ्कल्पः । 'अमुकदिनमारभ्याद्यदिनपर्यन्तं लुप्तानां सायंप्रातर्होमानां तण्डुलादिद्रव्यं यस्मै कस्मै ब्राह्मणाय संप्रददे' इति होम्यं दद्यात् । अमुकदिनमारभ्याद्यदिनपर्यन्तं लुप्तानां दर्शपौर्णमासस्थालीपाकानां पिण्डपितृयज्ञानां वैश्वदेवानां च तत्पर्याप्तं सव्रीह्याज्यादिद्रव्यं तन्निष्क्रयं वा दद्यात् ।

## ( पुनराधानप्रयोगः । )

ततः शुभे काले शुचिराचान्तः प्राणानायम्य देशकालौ सङ्कीर्त्य विच्छिन्नस्यावसथ्यस्य पुनराधानं करिष्य इति सङ्कल्पः । तदङ्गभूतगणपतिपूजनं स्वस्तिवाचनान्तं कुर्यात् । अत्र विशेषस्तदुक्तम् ।

"आधि(धान)वत्पुनराधानं दानमानविवर्जितम् ।
एवं स्मार्तेऽग्निहोत्रेऽपि वृद्धिश्राद्धं विवर्जयेत्" ॥

ततः खरे पञ्चभूसंस्कारान् कृत्वा निर्मथ्याग्निं स्थापयेत् । ततो ब्रह्मोपवेशनाद्याज्यभागान्तं (कृत्वा) कुर्यात् पत्तादिवत् । यथा "त्वन्नो०" । इदमग्नीवरुणाभ्यां० । "स त्वन्नो"० । इदमग्नीवरुणाभ्यां० । "इमम्मे वरुण०" । इदं वरुणाय० । "तत्त्वा यामि०" । इदं वरुणाय० ।"ये ते शतं०" । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च० । "अयाश्चाग्ने०" । इदमग्नये अयसे० । "उदुत्तमं०" । इदं वरुणाय० । "भवतन्नः०" । इदं जातवेदोभ्याम्० । ततश्चरुमभिघार्य 'ॐ अग्नये पवमानाय०' इदमग्नये पव० । 'ॐ अग्नये पावकाय०' । मदमग्नये पावकाय० । 'ॐ

अग्नये शुचये०' । इदमग्नये शुचये० । 'ॐ अदित्यै स्वाहा' । इदमदित्यै० । पुनराज्येन "त्वन्नो अग्न" इत्याद्यष्टर्चहोमः । ततश्चरुशेषेणा'ग्नये स्विष्टकृते०' । इदमग्नये स्विष्टकृते० । ततो दशाज्याहुतयः—"ॐ अयास्यग्नेर्वषट्कृतं यत्कर्मणात्यरीरिचं देवा गातुविदः स्वाहा" । इदं देवेभ्यो गातुविद्भ्यो० । ततो भूराद्या नवाहुतयः । ततो घृताक्तबर्हिर्जुहुयात् 'ॐ स्वाहा' इदं प्रजापतये० । ततः संस्रवप्राशनादि प्रणीताविमोकान्तं कृत्वा कृतस्य पुनराधानाख्यस्य कर्मणः साङ्गतासिद्ध्यर्थं सूत्रोक्तब्राह्मणमेकं भोजयिष्ये । अत्र स्मृत्युक्तं त्रयस्त्रिंशद्ब्राह्मणभोजनम् ।

इति स्मार्तोल्लासे पुनराधानप्रयोगः ।

---

## ( पुनराधाननिमित्तानि । )

अथ पुनराधाननिमित्तानि लिख्यन्ते । तत्र कृतावसथ्याधानौ पत्नीयजमानौ यद्यग्निं परित्यज्य ग्रामसीमामतीत्य वसेयातामेकरात्रीं तत्र प्रातरग्निं मथित्वोक्तविधिना ब्रह्मोपवेशनादि ब्राह्मणभोजनान्तमाधानं कुर्यात् । अनेकपत्नीकस्यैकस्याः पत्न्या मरणेऽरणिपात्रैः सहावसथ्येन तां दाहयित्वाऽऽशौचान्ते पुनराधानम् । अग्नावुपशान्ते होमकालद्वया(लाद्य)तिक्रमे गृहपतौ प्रोषिते प्रमादात्पत्न्या ग्रामान्तरवासे तथा गृहस्थिते यजमाने पत्न्याः प्रवासे प्राग्घोमकालादनागमने पुनराधानम् ।

केचित्तु ज्येष्ठायामग्निसन्निधौ तिष्ठन्त्यामन्यासां पतिसहितानां केवलानां वा कार्यवशाद् ग्रामान्तरस्थितौ पत्यौ वा (अग्नि) संन्निधौ तिष्ठति सर्वासां पत्नीनां ग्रामान्तरगमने नाग्निनाश इत्याहुः ।

तथा पत्न्या अग्निं विना समुद्रगानद्यतिक्रमे, भर्तृरहितायाश्चाग्निना सहिताया भयं विना सीमातिक्रमे, कर्मार्थाहरणादन्यत्र शकटं विना शम्यापरासादूर्ध्वं हरणे त्रिरुच्छ्वसन्तः प्रत्यक्षाग्निहरणे, मथ्यमानस्य दृष्टस्याग्नेर्मन्थनयन्त्रोत्थापनादूर्ध्वं नाशे, संवत्सरमेकं यजमानस्य होमाकरणे प्राजापत्यब्रह्मकूर्चयोरन्यतरप्रायश्चित्ताचरणादूर्ध्वं पत्न्याश्च पादकृच्छ्राचरणात्पुनर्विवाहवदाधानम् । उदकेनाग्न्युपश(मने)मे शिक्येनाग्न्युद्वहने प्रत्यक्षस्यारणिसमारूढस्य वा अग्नेरेकनामधेयशतयोजनगामिनदी ( योजनाधिकगामिनदी ) सन्तरणे वा सर्वत्र सीमातिक्र(मणे)मे आद्यन्तसीमातिक्रमणे वा पत्नीयजमानयोरन्वारम्भाभावे सूकर–गर्दभ–काक–शृगाल–कुक्कुट–मर्कट–शूद्रान्त्यज–महापातकि–शव–सूतिका–रजस्वला–रेतो–मूत्र–पुरीष–मेदोऽश्रु–श्लेष्म–शोणित–पूयास्थि–मांस–मज्जा–सुराप्रभृतिभिरमेध्यैः प्रत्यक्षस्यारणिसमारोपितस्य वाऽग्नेः स्पर्शे त्रीन् पक्षान्निरन्तरं पक्षहोमाकरणे पुनराधानम् । तथाग्नेरपहरणे प्रादुष्करणादूर्ध्वं पूर्वं वा शान्तेऽग्नौ मन्थने प्रारब्धेऽग्निजन्माभावे लौकिकाग्निब्राह्मणदक्षिणहस्ताजादक्षिणकर्णकुशस्तम्बजलानामन्यतमेऽग्निस्थानेऽप्रकल्पिते सूर्यास्तमये उदये वा जाते पुनराधानम् । अग्निनाशभ्रान्त्याऽग्निं मथित्वा पूर्वाऽग्निं दृष्ट्वा मथितमग्निं "मयं ते योनि"रिति मन्त्रेणारण्योः समारोप्य पूर्वेऽग्नौ होमादिकं विदध्यात् । यदा तु लौकिकाग्न्याद्यन्य-

